नन्दघनात्मकतया रसत्वेनाविर्भावः प्रतिपिपादयिषितस्तथैवोक्तं-च मूलकृता—

"भगवान् परमानन्दस्वरूपः स्वयमेव हि ॥
मनोगतस्तदाकाररसतामेति पुष्कलम्" इत्यादिना

तथाऽपि यावद्रसस्वरूपतयाऽऽविर्भावरूपफलोपधायकता पूर्णतमत्वप्रकाशनेन विशिष्टधर्मिणि श्रीकृष्णाख्य एवेति रहस्य-मार्मिकप्रवरो मूलकारः श्रीकृष्णनामैवोद्दिष्टवान्, युक्तं चैतत् पादविभूतौ नित्यप्रकटलीलायां शान्तदास्यसख्यवात्सल्यमाधु-र्यान्तमुख्यभक्तिरसनिर्यासरूपता यादृशविशिष्टप्रकारैरभिव्य-ञ्जिता भगवता तादृशविशिष्टप्रकारैरेवोपासकैरास्वादनीयताम-र्हति सर्वथोपास्ये नापरथेति, ध्वनितश्चायमर्थो—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि—

त्यादिना, पराक्रान्तं चात्र सूरिभिर्भक्त्याचार्य्यैरन्यत्र भूरीति तत एवावधारणीयं नेह विस्तरभिया तत्प्रतायते ।

अत्र यद्यपि ग्रन्थान्तरेषु रसशास्त्रनिबन्धकैर्बहुभिर्व्यक्ति-भजमानस्यैव रसविशेषस्य संयोगवियोगविशेषावुक्तौ; तन्मूलं-चाचार्यभरतमहर्षेः "तस्य द्वे अधिष्ठाने संभोगो विप्रलम्भश्चे"-ति चूर्णकं प्रतिभाति; तथाऽपि प्रकृते मूलकारः संभोगविप्रयो-गाख्येत्यनेन रतिं व्यशिषदित्यत्र प्रमाणं त्विदमेव यथा शृङ्गार-रसस्थायिताऽवच्छेदकतया रतित्वसामान्यसिद्धिस्तथा विप्रलम्भा-दिस्थायिताऽवच्छेदकतया तद्विशेषात्मकस्य रतिगतवैलक्षण्य-स्यापि सिद्धिं को नाम वारयितुमीष्टे, ध्वन्यते स्म चैषा पद्धतिरा-चार्यभरतमहर्षिप्रणीताद्ध "दृश्यते हि भावेभ्यो रसानामभिनिर्वृ-तिरि"त्यादिसूत्रतः, तस्मात्साधुरेव रतेरपि तादृशविशेषणी-कृतिर्मूलकृत इति सर्वमनवद्यम् । एतयोरुदाहरणे क्रमेण यथा—

बाहुप्रसारपरिरम्भकरालकोरु—
नीविस्तनालभननर्मनखाग्रपातैः।
क्ष्वेल्याऽवलोकहसितैर्व्रजसुन्दरीणा—
मुत्तम्भयन् रतिपतिं रमयांचकार॥

[श्री० भा० स्क० १० अ० २९]

गत्याऽनुरागस्मितविभ्रमेक्षितै—
र्मनोरमालापविहारविभ्रमैः।
आक्षिप्तचित्ताः प्रमदा रमापते—
स्तास्ता विचेष्टा जगृहुस्तदात्मिकाः॥ ४॥

[श्री० भा० स्क० १० अ० ३०]

क्रमप्राप्तं क्रोधं लक्षयन् तत्प्रयुक्तद्रुतिशालिनि चित्ते निविष्टाकारतां रतितो भिनत्ति—क्रोध इति।

**क्रोध ईर्ष्यानिमित्तं तु चित्ताभिज्वलनं भवेद्॥**
**तज्जन्यायां द्रुतौ सा तु द्वेषशब्देन गृह्यते॥ ५॥**

पराभ्युदयाद्यसहिष्णुताऽऽत्मकेर्ष्याजनितं मनसो दीप्तत्वं—क्रोधो भवति, तुशब्देनेर्ष्येतरन्निमित्तं व्यवच्छिन्नं ज्ञेयं, तेन क्रोधेन जन्यायां चित्तद्रुतौ निविष्टा सा श्रीकृष्णाकारता द्वेषपदवाच्या भवति, अत्रापि तुना क्रोधान्यद्द्रावकं निरस्तं बोध्यम्॥५॥
उक्तस्य चित्ताभिज्वलनस्य फलभेदेन द्वैविध्यं दर्शयति—अत्रेति।

**अत्र चेतोऽव्याकुलत्वं सोपद्रावकदर्शनात्॥**
**उपद्रावकनाशार्थं तत्प्रीत्यर्थं च तद् द्विधा॥ ६॥**

अत्र=द्वेषे सति, चेतसो व्याकुलत्वं=विक्षेपो जायते, अस्मिंश्च सति मनस्तापादीनामुपद्रवजनकानामुदयात् तन्निवृत्तिरिष्यते, सा च द्वेषसाफल्येन भवतीति चित्तव्याकुलत्वस्योपद्रावक-

नाशार्थकता लभ्यते, तदेवोक्तम्—"उपद्रावकनाशार्थमि"ति, कदा चिच्च चित्तप्रीतयेऽपि तद्व्याकुलत्वं पर्यवस्यति, अत उक्तं—तत्प्रीत्यर्थं चेति, उपपत्तिश्चैतदीयाऽनन्तरकारिकाविवरणे व्यक्तीभाविनी ॥ ६ ॥

पूर्वोक्तं द्वैविध्यं विशदयति—तत्रेति ।

**तत्राद्यं द्वेष एव स्याद् द्वितीयं रतिशब्दभाक् ॥**
**उपरिष्टात्तदुभयं मया स्पष्टीकरिष्यते ॥ ७ ॥**

तत्र=तयोरुपद्रावकनाशार्थकतया तत्प्रीत्यर्थकतया च द्विविधयोर्व्याकुलत्वयोः, प्रथमं व्याकुलत्वं द्वेष उच्यते, द्वितीयं च रतिविशेषः, या रतिर्मानाख्यविप्रलम्भतां भजते, तत्र यद्यपि रतिरेव स्थायिभावः; तथाऽपि किंचिद्विप्रियदर्शनश्रवणादिप्रयुक्तेर्ष्याकषायितत्वं विप्रलम्भविशेषताप्रयोजकतासमर्पकाभ्यामन्वयव्यतिरेकाभ्यां वैशिष्ट्यं प्रत्याय्यमानं दुरपह्नवमिति रसमार्मिका विदाङ्कुर्वन्तु, उपरिष्टाद्="ईर्ष्याजभयजौ द्वेषौ" "कामजे द्वे रती" इति वक्ष्यमाणाभ्यां कारिकाभ्याम्, उभयं=द्वेषरतिद्वयं—मया=कारिकारूपमूलकृता, स्पष्टीकरिष्यते विवरिष्यते ।

द्वेषे प्रत्युदाहरणं यथा—

इत्थं निशम्य दमघोषसुतः स्वपीठा-
दुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी
संश्रावयन्भगवते परुषाण्यभीतः ॥

अत्र श्रीभगवद्विषयकेर्ष्यया प्रदीप्तचेतसः शिशुपालस्य द्वेषः ।

[ श्री० भा० स्क० १० अ० ७४ ]

प्रीतिप्रयोजकेर्ष्यायामुदाहरणं यथा—

राधामञ्जुलमन्दिरादुपगतश्चन्द्रावलीमूचिवान्

राधे ! क्षेममिहेति तस्य वचनं श्रुत्वाऽऽह चन्द्रावली ।
कंस ! क्षेममये विमुग्धहृदये ! कंसः क्व दृष्टस्त्वया
राधा क्वेति विलज्जितो नतमुखः स्मेरो हरिः पातु वः ॥
अत्रेर्ष्याहेतुको मानश्चन्द्रावल्याः ॥ ७ ॥

क्रमप्राप्तं भयं लक्षयति—द्वेषेति ।

**द्वेषाहेतुः स्वमन्तूत्थं वैक्लव्यं चित्तगं तु यत् ॥**
**तज्जन्यायां द्रुतौ याऽऽस्ते रतिः सा भयमुच्यते ॥८॥**

यद्यपि द्वेषभयस्थले रतिरेव स्थायिनी किन्तु संकीर्णमिश्रता केवलमिश्रिता वा; नैषा शुद्धा, द्वेषे चित्तव्याकुलत्वस्य विरोधिनः सत्त्वात्, प्रीत्यर्थकतायामेव विप्रलम्भयोग्यतया स्थायित्वम्, उपद्रावकनिरासार्थकतायां न स्थायित्वम्, अत एव "तत्राद्यं द्वेष एव स्याद्" इत्युक्त्या तत्त्वं पर्युदस्तं, भयेऽपि संकीर्णमिश्रिततया केवलमिश्रिततया वा रतेः स्थायित्वं, तत्तु

"ईर्ष्याजभयजौ द्वेषौ भगवद्विषयावपि ।
न भक्तिरसतां यातः साक्षाद्द्रुतिविरोधतः"

इत्यादिना मूलकार एव निषेधमुखेनोपपादयिष्यति, तथाऽपि "प्रीतिभीविस्मयास्तथा" "तथा प्रीतिर्भयानकः" इत्युपसंहरन् कारिकाकृद्भयमपि भक्तिरसे संकीर्णविधयोपात्तवान्, तदेवाभिसंधायात्र द्वेषाहेतुरिति विशेषणमुपादत्ते, अयं भावः चित्तगतं निजापराधजनितं वैक्लव्यं विजातीयत्रासविशेषो मृत्युशरणानुसंहित्यादिजनकं यदा भवेत्तदाऽनेन सध्रीचीना रतिर्भयानकभक्तिरसतां विन्दते, द्वेषजनकतायां तु न तथात्वं भजते द्वेषस्य तापकतया चित्तद्रवशोषणादिति परमार्थः ॥ ८ ॥

उद्देशरीत्या प्राप्तं स्नेहं विवृणोति—स्नेह इति ।

स्नेहः पुत्रादिविषयः पाल्यपालकलक्षणः ।
सेव्यसेवकभावोऽन्यः सोऽप्युक्तस्त्रिविधो बुधैः ॥९॥

सोऽपि=सेव्यसेवकभावरूपोऽपि, त्रिविधत्वमव्यवहितोत्तरकारिकया वक्ष्यते, स्पष्टमन्यत् ॥ ९ ॥

द्वितीयप्रकारकस्नेहस्योक्तं त्रैविध्यं पद्यार्धेन विभज्य स्नेहं—विवृणोति सार्धपद्येन—भगवेति ।

भगवद्दास्यसख्याभ्यां मिश्रितं चापरं जगुः ॥
या कृष्णाकारता चित्ते तज्जन्यद्रुतिशालिनि ॥१०॥
पाल्यपालकभावेन सा वत्सलरतिर्भवेत् ॥
सेव्यसेवकभावेन प्रेयोरतिरितीर्य्यते ॥११॥

भगवन्निरूपितं दास्यं तत्संपर्कि सख्यं चेति द्वे, एनयोर्मिश्रणे चैकमित्थं त्रिधा सेव्यसेवकभावमूचुः प्राचीना रसशास्त्राचार्य्याः, अत्र यद्यपि मूलकृतोक्ते सेव्यसेवकभावे त्रैविध्यप्रयोजकं किमपि नासूचि तथाऽपि रसज्ञेष्वभियुक्ततमैः प्रीतिस्थायिको—दास्यरसः विश्रम्भस्थायिकः सख्यापरनामकः प्रेयान् रस इत्थं—दास्यसख्यरसद्वयी व्यवास्थापि सैवेहोपादेया परमतमप्रतिषिद्धमनुमतमिति न्यायेन समानतन्त्रसिद्धान्तरीत्या चेति प्रभुताज्ञाननिबन्धनसादरचाञ्चल्यात्मकसंभ्रमस्थायिकत्वेन, मुक्तसंभ्रमगाढ़विश्वासप्राणविश्रम्भस्थायिकत्वेन च दास्यसख्ययोर्भेद—इति बोध्यम् । एवं चोक्तसंभ्रमविश्रम्भप्रयुक्तद्रवशालितायां—चित्ते क्रमेण निविष्टा श्रीकृष्णाकारता संभ्रमरतिः विश्रम्भरतिश्चोच्येते, पाल्यपालकरूपे स्नेहे सति द्रुतचित्ते तदाकारता वात्सल्यरतिर्भवति, सेव्यसेवकभावेन द्रुतचित्ते तदाकारता प्रेया-

रतिः, निष्कृष्टप्रकारेणेयमेव प्रेयोरतिरुद्दिष्टनामद्वयवती यथायथं-व्यवह्रियत इति भावः ॥१०-११॥

क्रमागतं हर्षं लक्षयन् तत्प्रकारांश्च दर्शयति—हर्ष इति ।

**हर्षश्चित्तसमुल्लासः कथ्यते स चतुर्विधः ॥**
**एकः परानन्दमयः श्रीशमाहात्म्यकारणम् ॥१२॥**

हर्षत्वं हीष्टप्राप्त्यादिजन्यत्वे सति सुखविशेषत्वं, तदेव समुल्लासपदेनाभिलप्यते समुदुपसृष्टस्य लसतेस्तादृगर्थकत्वात्, स चतूरूपः, तेष्वाद्यमाह—"एकः परानन्दमयः", एकः=प्रथमः, प्रधानं वा

"एतदन्तं हि शास्त्रेषु साधनाम्नानमिष्यते—"

इत्युपसंहारात्, परानन्दमयः=निरतिशयानन्दप्रचुरः, एतदीयप्राधान्यं सूचयति—"श्रीशमाहात्म्यकारणम्" अत्र माहात्म्यरूपविषयेण विषयि तज्ज्ञानमुपलक्ष्यते, अन्यथा तन्माहात्म्यस्य शाश्वतिकतया तत्कारणाप्रसिद्धेरसंगत्यापत्तेः, तथा च भगवन्महत्त्वानुभवजनकत्वयोग्य इति पर्यवस्यति ॥१२॥

तज्जन्यां रतिं विवृणोति—तज्जेति ।

**तज्जन्यायां द्रुतौ शुद्धा रतिर्गोविन्दगोचरा ।**
**एतदन्तं हि शास्त्रेषु साधनाम्नानमिष्यते ॥१३॥**

तज्जन्यायां चित्तद्रुतौ भगवद्विषयिका रतिः शुद्धा, अपरैः संकरमिश्रणाभावादिति भावः, प्राधान्यं निगमयति—एतदन्तमिति, शास्त्रेषु परमपुमर्थोपलब्ध्युपायप्रतिपादकेषु, हि निश्चयेन, साधनानां=परमपुमर्थप्रापकाणाम् , आम्नानम्=उपदेशः, इष्यते परमपुरुषार्थिभिरिति शेषः । उक्तं चैतत् स्वयमेव भगवता श्रीमदृषभेण—

पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ।
यावत् क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः ॥
एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययाऽऽत्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावद् ॥
इत्यादिना ॥१३॥

[ श्री० भा० स्क० ५ अ० ५ ]

हर्षस्य द्वितीयं प्रकारं दर्शयति—व्रीडेति ।

**व्रीडाविकृतवाग्वेषचेष्टाऽऽदिजनितोऽपरः ॥**
**तज्जन्यायां द्रुतौ चेतोविकासो हास उच्यते ॥१४॥**

लज्जया विरूपैर्वाग्वेषचेष्टाऽऽदिभिरुत्पादितो द्वितीयविधो-हर्षः, चित्तस्यैतज्जन्ये द्रवे यो विकासो विस्तारः स हासः ॥१४॥

तस्यैव तृतीयं तं निरूपयति—लोकोत्तरेति ।

**लोकोत्तरचमत्कारिवस्तुदर्शनजः परः ॥**
**तज्जन्यायां द्रुतौ चेतो विकासो विस्मयो मतः ॥१५॥**

लोकोत्तरस्य=अस्वाभाविकस्य, चमत्कारिणः=सुखविशेष-जनकस्य वस्तुनो, दर्शनाद्=ज्ञानाद्, अत्र दृशिर्ज्ञानसामान्यपरः श्रवणादपि तादृशस्य तदुत्पत्तेः, जातो हर्षस्तृतीयभेदः, तेन जनितायां द्रुतौ चित्तस्य यो विकास उल्लासः स विस्मयः ॥१५॥

तदीयं तुरीयं प्रकारं कथयति—युद्धेति ।

**युद्धादितापजनितो वीराणां जायतेः परः ॥**
**जितचित्तस्य विस्तारो द्रुतस्योत्साह उच्यते ॥१६॥**

युद्धादितो यस्तापः प्रज्वलनं ततो जनितो वीराणां शूरा-णां हर्षः परश्चतुर्थः, वीरेषु योधिप्रतियोधिनोः कतरीयोऽयमत-

आह—जितेति, जितस्य चित्ते निर्दिष्टतापतो द्रुते यो विस्तार-औन्नत्यापरपर्यायः स उत्साहः कथ्यते ॥ १६ ॥

यथोद्देशं शोकं लक्षयति—इष्टेति ।

इष्टविच्छेदजनितो यश्चित्ते क्लिष्टतोदयः ॥
तज्जन्यायां द्रुतौ विष्टा रतता शोक उच्यते ॥१७॥

इष्टस्य=प्रियस्य, विच्छेदाद्=वियोगतो जनितो यः चित्ते क्लिष्टतायाः=व्याकुलत्वस्य, उदयस्तज्जन्यायां द्रुतौ प्रविष्टा रतिः शोक उच्यते ॥ १७ ॥

चित्तद्रावकत्वेन निर्दिष्टेषु संदर्भशुद्ध्यर्थं दयां लक्षयति—दयेति ।

दया घृणा स्याद्विषयतुच्छत्वज्ञानदीर्घिका ॥
तया द्रुते तु मनसि जुगुप्सा जायते त्रिधा ॥१८॥

विषयाणाम्=इन्द्रियार्थानां, तुच्छत्वस्य=क्षुद्रत्वस्य ज्ञानेन दीर्घा=महती, घृणा=दया स्यात्, तुच्छत्वज्ञानं च त्रिधा भवति विषयेषु, तेषामुद्वेजकत्वेन क्षोभकत्वेन विवेकानास्पदत्वे न च, अत एव जुगुप्साऽपि दयया द्रुते चित्ते त्रिधा व्यवह्रियते ॥१८॥

त्रैविध्यमेव कारिकाद्वयेन दर्शयति—पूतीत्यादिना ।

पूतिव्रणादिविषये कथितोद्वेगिनी बुधैः ॥
श्मशानोत्थपिशाचादिविषया क्षोभिणी भवेत् ॥१९॥
देहेन्द्रियादिदुःखे त्वविचारणपुरःसरा ॥
घृणा शुद्धेति कविभिः सा जुगुप्सा प्रकीर्त्तिता ॥२०॥

दुर्गन्धव्रणादिविषयिका जुगुप्सोद्वेगिनी, श्मशानपिशा-चादिविषयिकेयं क्षोभिणी, शरीरेन्द्रियादिनिबन्धनदुःखविषयि-

का सा शुद्धा घृणा बाह्योपाधिसंपर्काभावाद्, एषा तु विवेकवैधुर्यप्रयुक्ता, एवं दया त्रिविधा भवति ॥ १९-२० ॥

प्रसङ्गप्राप्तान् उत्साहविशेषान् लक्षयन् पूर्वं दयोत्साहं निर्दिशति—या त्विति ।

या तु शोच्यस्य रक्षाऽर्थं प्रवृत्तिरनुकम्पया ॥
तया द्रुते तु मनसि दयोत्साहः स्मृतो बुधैः ॥२१॥

शोच्यस्य=दयनीयस्य, रक्षाऽर्थं=दुःखप्रहाणार्थम् , अनुकम्पया=कृपया या प्रवृत्तिः=चेष्टा तया मनसि द्रुते दयोत्साह उदेति ॥ २१ ॥

दानोत्साहं लक्षयति—सर्वेति ।

सर्वस्वमपि दास्यामि प्रार्थयेति च यो महान् ॥
उद्यमो द्रुतचित्तस्य दानोत्साहः स उच्यते ॥२२॥

हे अर्थिन् ! त्वं प्रार्थय=स्वाभीष्टं वस्तु याचस्व, तुभ्यं सर्वस्वमपि दास्यामि, इत्याकारो यो महान् प्रशंसनीयः, उद्यमः=उत्साहो दातुः स दानोत्साहः कथ्यते ॥ २२ ॥

धर्मोत्साहं लक्षयति—तथेति ।

तथा स्वधर्मरक्षाऽर्थं या प्रवृत्तिः प्रयत्नतः ॥
तया चित्तस्य विस्तारो धर्मोत्साहो द्रुतौ भवेद् ॥२३॥

एवं स्वधर्मस्य रक्षाऽर्थं=परिपालनाय, वास्तविकी या चेष्टा; तया द्रुते चित्ते य उत्साहो भवेत् स धर्मोत्साह उच्यते ॥२४॥

चित्तद्रावकनिर्देशिकायां कारिकायामुक्तेनादिशब्देन ग्राह्यं शमं लक्षयति—वशीति ।

वशीकाराख्यवैराग्यंयत् कामास्पृहताऽऽत्मकम् ॥
तेन द्रुतस्य चित्तस्य प्रकाशः शम उच्यते ॥२४॥

यत् कामस्य=कामनाविषयत्वावच्छिन्नस्य, अस्पृहता=रागशून्यता, तत्स्वरूपं वशीकाराख्यं वैराग्यं=वीतरागता, यथाहुर्भगवत्पतञ्जलिपादाः—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्", दृष्टेषु=ऐहलौकिकेषु, आनुश्रविकेषु=पारलौकिकेषु, विषयेषु वितृष्णस्य=वीतरागस्य वैराग्यं वशीकारपदवाच्यं भवति, तेन निरुक्तवैराग्येण द्रुते चित्ते प्रकाशः=आलोकः, शमः=शान्तिरुच्यते ॥ २४ ॥

एवं चित्तद्रावकान् प्रदर्श्य; भावान्तरेषु चित्तद्रुतिजनकत्वाभावं प्रदर्शयति—इतोऽन्यथेति ।

**इतोऽन्यथा तु चित्तस्य न द्रुतिर्विद्यते क्व चित् ॥**
**तदभावात्तु भावो न निरुक्तान्योऽस्ति कश्चन ॥२५॥**

इतः=कामक्रोधभयस्नेहहर्षशोकदयाशमैश्चित्तं यथा द्राव्यते तादृशप्रकाराद्, अन्यथा=प्रकारान्तरेण, क्व चित्=सहृदये, चित्तस्य द्रुतिर्नानुभविकी, तदभावात्=चित्तद्रुत्यजननाद्, उक्ताद् भावाष्टकाद् भिन्नः कोऽपि भावः स्थायिभावो नास्ति, अयं भावः—निरूपणीयत्वेन प्रकृते सर्वस्मिन्नपि सावान्तरभेदे भक्तिरसे जीवातुतया स्थायिभावस्यैव प्रयोजकतेति निर्विवादमेव, स्थायिता च तन्निरूपिता रतित्वावच्छिन्नस्य साधारणे साधारण्याः असाधारणेऽसाधारण्या इत्यन्यदेतद्, स्थायिभूता=रतिस्तु "स्थायिभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयत" इत्युक्तदिशा भगवदाकारतैव, तदाकारता च "द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुने" त्यादिरीत्या चित्तद्रवमपेक्षते, तदीयद्रुतिश्च द्रावकाधीना, द्रावकाश्च कामादयोऽष्टावेव नान्ये, इत्यर्थादागतोक्ताष्टकातिरिक्तेषु स्थायितायोग्यता, तस्मादुपपन्नं भावो न निरुक्तान्योऽस्तीति ॥ २५ ॥

उक्तमेवान्वयमुखेन विशदयति—यावेति ।

**यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि ॥**
**स्थायिनो, रसतां यान्ति विभावादिसमाश्रयात् ॥२६॥**

यद्यपि यावत्यो द्रुतयश्चित्ते तावन्त एव स्थायिभावा इत्यापाततः प्रतीयमानोऽप्यर्थो नासंगतस्तथाऽपि प्रातिस्विकरूपेण द्रुतिसमसंख्यकत्वे स्थायिनामानन्त्येनैषामियत्ता दुरवधारणैव स्यात्, न स्याच्च नियमोऽपि किंजातीयस्थायिनः किंजातीयद्रुतिका इत्यत्र, अतोऽनुगमकं रूपं किंचिद्व वक्तुमुचितं, द्रावकाणां कामादीनां परम्परयाऽनुगमकत्वे तेषामपि स्वतोऽननुगतत्वेन कथमिवापरानुगमकता भवेत्तस्माद्व अनुगतैः कामत्वादिभिः उपाधिताऽवच्छेदकैरनुगतीकृतैः कामादिभिरुपाधिभिरुपाहिताश्चित्तीया द्रुतयोऽप्यनुगमयितव्यतामासाद्य; स्वात्मकान् स्थायिनोऽनुगमयन्तीति चित्तद्रावकताऽवच्छेदकानां कामत्वादीनामष्टत्वेन तदवच्छिन्नकामाद्युपाधिनिरूपितोपाधेयताऽवच्छेदकावच्छिन्नचित्तद्रुतीनामप्यष्टतया तदभिन्नाः स्थायिनोऽपि तावन्त एवेति स्वनुगमास्ते, नियमश्च तादृशस्तदीयः सुकर इत्यभिसंधायैव मूलकृता "यावत्यो द्रुतय" इत्याद्युक्तमिति प्रतिभाति । अत्र तावन्त एव स्थायिन इत्युक्त्या ते रसत्वेनाविर्भूष्णुताशालिन इति प्रत्ययस्य यद्यपि यादृश्या द्रुत्या स्थायित्वेनाभिमतया रसाविर्भावौपयिकविभावादिसाकल्पसमवधानं कुतोऽपि प्रतिबन्धकान्नासादितं तामादायाप्रमात्वं दुर्वारमेव, न चोक्तप्रत्ययोऽप्रामाणिक एवेति वाच्यम्, "रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति सिद्धान्ताद्व यस्य भावस्य रसावस्थाऽवश्यं भाविनी तस्यैव स्थायित्वोपगमात्; तथाऽपि रसाविर्भावस्वरूपयोग्यत्वस्योक्तस्थलीयद्रुतावपि सत्त्वेनादोषात, तथा च रसत्वेनाविर्भावयो-

ष्यताऽवच्छेदकावच्छिन्नस्यैव रसनिरूपितस्थायित्वमिष्यत इति रसदर्शनविदां राद्धान्त इति दिक् ॥ २६ ॥

चित्तद्रुतिसामान्यानां स्थायिनां रसतां भगवद्विषयकत्वेऽपवदति—धर्मोत्साह इति।

**धर्मोत्साहो दयोत्साहो जुगुप्सा त्रिविधा शमः ॥**
**षडप्येतेन विषया भगवद्विषया न हि ॥२७॥**

एतेन—विभावादिसमाश्रयाद्य यावदुक्तद्रुत्यात्मकस्थायिनां-रसभावेन, धर्मदयोत्साहौ जुगुप्सात्रयं शमः षडपि विषयाः—लौकिकविभावादिप्रयोज्यरसास्वादस्य स्थायित्वेन विषया भवन्ति, परन्तु भगवद्विषया न हि भवन्ति। अथ वा—एते नेत्यत्र पदद्वयम्, एते षड़पि प्रकृतस्य भक्तिरसस्य न विषयाः—न स्थायिनः, हि=यतः, न भगवद्विषयाः, भजनीयविषयकत्वाभावाद्ध भक्त्यङ्गत्वासंभव इत्यर्थः। इत्थं व्याख्यान एव मूलकृतोऽपि स्वारस्यमव्यवहितोत्तरकारिकातः प्रतीयते ॥ २७ ॥

उक्तमेवार्थं द्रढयति—धर्मेति ॥

**धर्मवीरो दयावीरो बीभत्सः शान्त इत्यमी।**
**अतो न भक्तिरसतां यान्ति भिन्नास्पदत्वतः ॥२८॥**

धर्मानुबन्धी वीररसो दयाऽनुबन्धी वीररसो जुगुप्सात्रयनिष्ठस्थायितानिरूपको वीभत्सः शान्त इमे षडपि भक्तिरसतांनाप्नुवन्ति भजनीयालम्बनकत्वाभावात्, तदेवाह—"भिन्नास्पदत्वतः" भजनीयभिन्नालम्बनकत्वादित्यर्थः, स्पष्टप्रतिपत्त्यर्थंभक्तिरसप्रत्युदाहरणविधयैते प्रदर्श्यन्ते,

तत्र धर्मवीरो यथा—

राज्यं च वसु देहश्च भार्या भ्रातृसुताश्च ये।
यच्च लोके ममायत्तं तद्ध धर्माय सदोद्यतम् ॥

अत्र महाराजयुधिष्ठिरस्योत्साहो धर्मविषयकः,
दयावीरो यथा—
स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्त्तयितुं यतस्व ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥
अत्र महाराजदिलीपस्योत्साहो धेनुविषयकदयाऽनुबन्धी,
उद्वेगिन्या जुगुप्साया स्थायिन्या निरूपको बीभत्सो यथा—
विकीर्णहरिचन्दनद्रविणि यत्र लीलाऽलसा-
निपेतुरतिचञ्चलाश्चतुरकामिनीदृष्टयः ।
तदेतदुपरिभ्रमन्निबिड़गृध्रजालं जनै—
र्लुठत्कृमि कलेवरं पिहितनासिकैर्वीक्ष्यते ॥
क्षोभिण्या जुगुप्साया स्थायिन्या निरूपको बीभत्सो यथा—
उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ॥
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का—
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

दुःखनिबन्धनाया शुद्धजुगुप्सायाः स्थायिन्या निरूपको-
बीभत्सो यथा—

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ।
वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते ।
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥

अत्रायं विशेषः—अविवेकसमानाधिकरणायामेवास्यां घृ-
णायां बीभत्सविशेषस्थायिता, तत्सामानाधिकरण्ये तु शान्त-
निरूपिता संचारिता ज्ञेया ।

शान्तस्य यथा—

आस्तामकण्टकमिदं वसुधाऽधिपत्यं-
त्रैलोक्यराज्यमपि नैव तृणाय मन्ये।
निःशङ्कसुप्तहरिणीकुलसंकुलासु
चेतः परं वलति शैलवनस्थलीषु॥

इत्थं षट्त्स्वप्येषु भिन्नास्पदतया भक्तिरसता नास्ति।

अत्र शान्तस्य रसत्वे रसदर्शिनां सगोत्रकलहश्चिरादनुवर्त्तते-तत्राचार्य्यभरतमहर्षिणा तु—

"शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ नाट्ये रसाः स्मृताः॥
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मने"ति

सूत्रयताऽष्टौ रसानुक्त्वा स्थायिनोऽप्यष्टावेवोक्तास्तदव्यवहितोत्तरं च निर्वेदादयः संचारिणो निर्दिष्टाः, एतदेवानुरुन्धाना अत्रभवन्मम्मटभट्टा अपि रसाष्टकमेव प्रोच्य;

"निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः"

इति भङ्ग्यन्तरेण शान्तं निर्दिश्य रसानुपसमहार्षुः, एवमितरेऽप्येतदनुयायिनो निबन्धारस्तथैवोक्तवन्तः, एवं स्थिते के चन ऋजवोऽष्टावेव रसा वस्तुतयेत्यवादीधरन्,

"शान्तस्य शमसाध्यत्वान्नटे च तदसंभवात्।
अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते"

इत्युपापीपदंश्चोक्तमर्थम्, किन्त्वेतन्न समीचीनं, सिद्धान्ते नटे रससामान्यस्यैवानुत्पत्त्या तन्निष्ठः शमाभावोऽकिञ्चित्करोऽन्यथा तत्र रत्याद्यभावाद्रसान्तराणामप्यनुपपत्तिरत एव

संगीतरत्नाकरे नृत्याध्याये श्रीमन्निशङ्कशार्ङ्गदेवाः—

"तदचारु यतः किंचिन्न रसं स्वदते नटः।
सामाजिकास्तु लिहते रसान् पात्रं नटो मतः"॥

"ते शुद्धहृदयाः शान्तं स्वविभावविभावितम् ।
एकाग्रचेतसः सन्तोऽनुभवन्तीति युज्यते"
"रतिहासश्शुचः क्रोधोत्साहौ भयजुगुप्सुते ।
विस्मयश्चाथ निर्वेदः स्थायिभावा नवेत्यमी"

इत्यादिना नवरसीमभ्युपगच्छन्तो नव स्थायिनो व्यवातिष्ठिपन् ,

न च संगीतशास्त्रे तथोक्तेः प्रकृते किमायातमिति शङ्कनीयम्, चरमोपेयरसप्रतिपादकत्वेन समानतन्त्रसिद्धान्तनयेन तदुक्तेर्निर्विवादमादरणीयतमत्वाद्,

न चैवमपि मुनिवचनविरोधो दुष्परिहरो निर्मूलकता चेति दोषद्वयमापततीति वाच्यम्, एतदेवाशङ्क्य तत्रैव नृत्याध्याये—

"उद्दिश्य स्थायिनः प्राप्ते समये व्यभिचारिणाम् ।
अमङ्गलमपि ब्रूते पूर्वं निर्वेदमेव यत्" ॥
मुनिर्मेनेऽस्य तन्ननं स्थायिताव्यभिचारिते ।
पूर्वापरान्वयो ह्यस्य मध्यस्थस्यानुषङ्गतः"

इति समादधिरे ते, तथा च निर्वेदस्य स्थायिनामन्ते संचारिणामादावुल्लेखान्मध्यमणिन्यायेन देहलीदीपकन्यायेन वोभयतैव महर्ष्यनुमतेति कल्प्यते,

न च तदीयकल्पनायामपि किं मूलमिति चोद्यम् ?

श्रीमदग्निपुराणे रसनिरूपणाध्याये—

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताख्याः............

इति वचनेन नवत्वं रसानां भगवच्छ्रीकृष्णद्वैपायनपादा अपि समनुमन्यन्ते स्म,

अत एव पण्डितराजा अपि रसानां नवत्वस्थापने "मुनिवचनं चात्र मानमि"ति समसूसुचन्, तत्रत्यमुनिशब्देनाग्निपुराण-

स्त्तृपादा एव, न तु नाट्यस्मृतिस्त्तृपादा ग्राह्याः, नाट्यसूत्रेषु निर्दिष्टवचनानुलम्भादिति सर्वपथीना विपश्चितोऽनुशीलयन्तु,

न चैवं स्थितेऽग्निपुराण एव "स्थायिनोऽष्टौ रतिमुखाः", इति वचनोपलब्ध्या कतमः स्थायी निर्वासनीयः कतमस्य वा रसत्वमुच्चिच्छित्सितव्यमिति संकटे विवादाकुलतया शमशान्तयोरेवैतत्सौभाग्यं फलिष्यतीत्यपि सांप्रतम्, क्लृप्ते खलु शान्तस्य रसत्वे तन्निरूपिता स्थायिता कस्येति विचारणायां परम्पराऽऽगतान् मतभेदान् श्रीशार्ङ्गदेवा एवोदटङ्कयन्—

"जुगुप्सां स्थायिभावं तु शान्ते केचिद्बभाषिरे ।
उत्साहमाहुरन्ये, ऽन्ये शमं सर्वान् परे विदुः" ॥

इति प्रतिपादयन्तः ।

एवं च शान्तीयस्थायित्वे मतचतुष्टये नाट्यसूत्रानुमतं तृतीयमतम्, आग्नेयानुमोदितं प्रथमं द्वितीयं वाऽस्तु; द्वयोरप्यष्टान्तर्गतत्वाविशेषात्, स्थायिविषयकमतभेदस्य—

"उपेयप्रतिपत्त्यर्था उपाया ह्यव्यवस्थिताः" ।

"गुणे त्वन्याय्यकल्पना" इत्यादिरीत्याऽकिंचित्करत्वात्, "स्थायिनोऽष्टौ रतिमुखाः" इत्याग्नेयवचनघटकस्थायिपदस्य स्थायिताऽवच्छेदके तात्पर्यं, तेन न वैषम्यं, तात्पर्यग्राहिका च तत्रत्यैव रसानां नवत्वोक्तिः ।

नन्वेवं शान्तीयस्थायिभावविषये मतचतुष्टये जुगुप्सात्वादीनां चतुर्णां शान्तव्यक्तिकारणताऽवच्छेदकतया व्यभिचारात् कार्य्यकारणभावानुपपत्तिरिति चेद्? न—ईदृशस्थले कार्यताऽवच्छेदककुक्षावव्यवहितोत्तरत्वनिवेशस्य सर्वानुमोदितत्वाद्, न च सर्वान् परे विदुरिति तुरीये मते जुगुप्साऽऽदित्रयस्यापि स्थायित्वे कतमीयधर्मस्य स्थायिताऽवच्छेदकत्वं स्यादिति शङ्क्यम्?

अत्र मते जुगुप्सात्वोत्साहत्वशमत्वेषु शान्तीयस्थायिताऽवच्छेदकतायां व्यासज्यवृत्तित्वस्योपगमात् ,परन्त्वेतत्सर्वमपि प्राकृतालम्बनकतया प्राकृतरसाभिप्रायकं ज्ञातव्यम् , प्रकृते तु भक्तिरसं निरूपयितुं प्रवृत्तो मूलकारोऽप्राकृतं भजनीयं भगवन्तमालम्बमाना ये स्थायिनो रसपदवीमध्यासितुमर्हन्ति त एव भक्तिरसताभाजो भवन्तीति सिद्धान्तमनुसरन् शान्तस्यापि भक्तिरसतां पर्य्युदास्थत् ।

परमार्थतस्तु—रसतत्त्वाभिरूपतल्लजा भक्तिरसेषु मधुरान्तिमान् मुख्यान् रसान् प्रतिपादयन्तः तेष्वादिमं शान्तं मुख्यभक्तिरसं प्राहुः—उपपत्तिश्चात्रेत्थम्—भक्तिरसमात्रं प्रति भगवद्विषया रतिः स्थायिभाव इति तु क्लृप्तमेव, तदुक्तं—

"स्थायी भावोऽत्र स प्रोक्तः श्रीकृष्णविषया रतिः"

इयं च रतिर्मुख्या गौणी चेति द्विधा, तत्र

"शुद्धसत्त्वविशेषात्मा रतिर्मुख्येति कीर्त्तिता"

तथा

"विभावोत्कर्षजो भावविशेषो योऽनुगृह्यते ।
संकुचन्त्या स्वयं रत्या सा गौणी रतिरुच्यते,"

एवं मुख्यां गौणीं च रतिं लक्षयित्वा;

"शुद्धा प्रीतिस्तथा सख्यं वात्सल्यं प्रियतेत्यसा"वित्यादिना मुख्यायाः पञ्चविधत्वमुपपाद्य;

"सामान्याऽसौ तथा स्वच्छा शान्तिश्चेत्यादिमा त्रिधे"—त्यादिना शुद्धाया एव रतेर्विशेषः शान्तिरित्युक्तं, ततश्च

"प्रायः शमप्रधानानां ममतागन्धवर्जिता ।
परमात्मतया कृष्णे जाता शान्ती रतिर्मता"—

इत्यादिना शान्त्यात्मिका रतिरुपसंहृता, एवं च शान्तिरतिस्थायिकः शान्तो भक्तिरसः सिद्धः, उदाहृतश्च—

हरिवल्लभसेवया समन्तादपवर्गानुभवं किलावधीर्य्य ।
घनसुन्दरमात्मनोऽप्यभीष्टं परमं ब्रह्म दिदृत्तते मनो मे ॥

न चैतदखिलमप्रामाणिकमिति भ्रमितव्यम् ? आग्नेये किल

अक्षरं ब्रह्म परमं सनातनमजं विभुम् ।
वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम् ॥
आनन्दः सहजस्तस्य व्यज्यते स कदा चन ।
व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया ॥

इत्यादिना भूयसा प्रबन्धेनोपपादितत्वाद्, इतोऽपि विशेषः श्रीमद्भागवतादिषु द्रष्टव्यः, नाट्यसूत्रे तु प्राकृतरसनिरूपणानुरोधाद्दास्यसख्यवात्सल्यानां भावतोक्ता, सैव च प्राकृतरसनिरूपणप्रवृत्तैर्निबन्धकारैः प्राच्यैरुदीच्यैश्चानूदितेति तदनुक्तिमात्रतो नाप्रामाणिकता, नापि न्यूनता, नतरां विरुद्धता च, प्रकृतमूलकारश्च शान्तरसस्य भक्तिरसबहिष्ठं विषयविरागात्मकनिर्वेदपर्य्यायं शममभिप्रेत्यैवोक्तवान्, बीभत्से च तथात्वं भगवदालम्बनकरत्या साक्षादनुपस्कृतत्वाज्जुगुप्सायाः, धर्मदयोत्साहयोस्तु स्पष्टैव भिन्नालम्बनकतेति विचिन्त्यैव सुसूक्ष्मदृशा सुधियोऽवधारयन्त्विति सर्वमवदातम् ॥ २८ ॥

भक्तिरसताऽनर्हताप्रसङ्गेन स्थलान्तरमपि तादृशं दर्शयति—ईर्ष्येति ।

**ईर्ष्याजभयजद्वेषौ भगवद्विषयावपि ॥**
**न भक्तिरसतां यातः साक्षाद् द्रुतिविरोधतः ॥२९॥**

ईर्ष्योक्तस्वरूपा तज्जन्यो भयजन्यश्च द्वेषौ भगवन्तं विषयीकुर्वन्तावपि साक्षादेव चित्तद्रवविरोधिनावतो न भक्तिरसतांभजतः,

अयं भावः—यथा जुगुप्साऽऽदयो हि चित्तद्रावकाः सन्तोऽपि भगवदनालम्बनकतया भक्तिरसत्वपदवीं प्राप्तुं नोत्सहन्ते; तथोक्तद्वेषद्वयमपि भगवद्विषयकमपि चित्तद्रावकत्वाभावाद् भक्तिरसीभवितुं न क्षमते, एवं च भगवद्विषयकत्वे सति चित्तद्रावकभावत्वमेव मूलकृन्मते भक्तिरसोदयत्वावच्छिन्नजन्यतानिरूपितजनकताऽवच्छेदकमिति न काचिदनुपपत्तिरापत्तिर्वेति॥२९॥

उक्तद्वेषयोः सरवे भक्तानास्वाद्यतां सहेतुकमाह—शुद्धइति।

**शुद्धो रौद्ररसस्तत्र तथा रौद्रभयानकः ॥**
**नास्वाद्यः सुधिया प्रीतिविरोधेन मनागपि ॥ ३०॥**

शुद्ध ईर्ष्याजनितक्रोधस्थायिको रौद्ररसः तथेर्ष्याजन्यद्वेषसंकीर्णभयस्थायिको रौद्रभयानकश्च यद्यपि परत्र रसौ भवतो भक्तिरसत्वं तु तत्र नायाति, तत्र हेतुः प्रीतिविरोधेनेति, अयं भावः—अपर्यनुयोज्यो हि वस्तुस्वभावः तेन यद्विषयेर्ष्या भवेन्न जातु तद्विषयिका प्रीतिरुदेति ततश्च भक्तिरसास्वादलिप्सुमतिना किंचिदपि तत्रास्वादो न प्राप्यते ॥ ३० ॥

तर्हि के भावा भगवद्विषयीभावार्हा इत्याह—कामजे इति।

**कामजे द्वे रती शोकः प्रीतिभीविस्मयास्तथा ॥**
**उत्साहो यदि दाने च भगवद्विषया अमी ॥ ३१ ॥**

कामजे द्वे रती—संभोगविप्रलम्भीये, शोकप्रीतिभीविस्मया-दानोत्साहश्च, एते भावा भगवद्विषया भवन्ति ॥ ३१ ॥

एतेषां रसत्वं भक्तिरसत्वं चाह—व्यामिश्रेति।

**व्यामिश्रभावरूपत्वं यान्त्येते क्षीरनीरवत् ॥**
**विभावादिसमायोगे तथा भक्तिरसा अपि ॥ ३२ ॥**

एते भावा विभावादीनां समायोगे=संबन्धे समानविषयिकत्वे विभावादिविषयकसमूहालम्बनज्ञानविषयताशालित्वे सतीति यावद् व्यामिश्रतां=पार्थक्यप्रतीत्यनर्हताऽऽख्येन विशेषेण; आसमन्ताच्चर्वणाविश्रान्तिलक्षणावधि मिश्रणं प्रातिस्विकरूपेणाविवेच्यतां भजन्ति, तत्र दृष्टान्तः—क्षीरनीरवदिति, क्षीरनीरयोर्यथा मिश्रणे किंचिदपि पार्थक्यं नोपलभ्यते तथा, तदा चैते रसपदवाच्या भवन्ति, भगवद्विषयकत्वे तु भक्तिरसा उच्यन्ते॥ ३२॥

तानेवोदिशति—शृङ्गेति।

**शृङ्गारः करुणो हास्यस्तथा प्रीतिर्भयानकः॥**
**अद्भुतो युद्धवीरश्च दानवीरश्च मिश्रिताः॥ ३३॥**

प्रायेणेयं कारिका स्पष्टा, मिश्रिता इति, अयंभावः—मूलकृताऽनुपदमेव भावानां चातुर्विध्यं वक्ष्यते, तदनुसारेण रसानामपि तथात्वं विवक्ष्यते, तत्र भावानां भगवद्विषयकत्वेन विभावादिसंपर्के मिश्रितत्वेन परिभाषेष्यते, तदेवोक्तं मिश्रिता इति, अतएव प्रीतिरप्यत्र सख्याख्या ज्ञेया, दास्यवात्सल्ययोः शृङ्गाहिकया शुद्धत्वेन वक्ष्यमाणत्वादिति भावः। एषामुदाहरणेषु—संभोगशृङ्गारो यथा—

दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै-
राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः।
हस्तेनानमितः कचेऽधरसुधापानेन संमोहितः
कृष्णः कामपि तृप्तिमाप तदहो कामस्य वामा गतिः॥

विप्रलम्भशृङ्गारस्तु—

अभिलाषविरहेर्ष्याप्रवासशापहेतुकतया पञ्चविध इति तत्रभवन्मम्मटभट्टाः प्राहुः, के चित्तु—

"पूर्वानुरागमानाख्यप्रवासकरुणात्मना ।
विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः"

इत्थं तच्चतुष्टं वदन्ति, रसशास्त्राचार्याभियुक्ततज्ज्ञास्तु—पूर्वरागमानप्रवासप्रेमवैचित्त्यभेदात्तस्य चातुर्विध्यमुपगच्छन्ति, पूर्वमतविरोधस्तु नोद्भाव्यः—पूर्वरागेणाभिलाषस्य, मानेनेर्ष्यायाः, प्रेमवैचित्त्यस्य विशेषेण विरहस्य, शापस्य च शप्तयोरैकाधिकरण्ये पाण्डुमाद्र्योरिव विरहेण; वैयधिकरण्ये यक्षतत्कान्तयोरिव प्रवासेनान्तर्भावं प्रतिपादयन्ति, दिङ्मात्रेणोदाहियते—

अकस्मादेकस्मिन् पथि सखि मया यामुनतटं—
व्रजन्त्या दृष्टो यो नवजलधरश्यामलतनुः ।
स दृग्भङ्ग्या किं वाऽकुरुत न हि जाने तत इदं—
मनो मे व्यालोलं क्व चन गृहकृत्ये न लगति ॥

अत्र पूर्वरागः ।

करुणो यथा—

तं नागभोगपरिवीतमदृष्टचेष्ट—
मालोक्य तत्प्रियसखाः पशुपा भृशार्त्ताः ।
कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा—
दुःखाभिशोकभयमूढधियो निपेतुः ॥

हास्यो यथा—

यास्याम्यस्य न भीषणस्य सविधे जीर्णस्य शीर्णाकृते-
र्मातर्नेष्यति मां पिधाय कपटादाधारिकायामसौ ।
इत्युक्त्वा चकिताक्षमद्भुतशिशावुद्वीक्षमाणे हरौ
हास्यं तस्य निरुन्धतोऽप्यतितरां व्यक्तं तदाऽऽसीन्मुनेः ॥

दास्यनामा प्रीतिर्यथा—

नवाम्बुधरबन्धुरः करयुगेन वक्त्राम्बुजे
निधाय मुरलीं स्फुरत्पुरटनिन्दिपट्टाम्बरः ।

शिखण्डकृतशेखरः शिखरिणस्तटे पर्यटन्
प्रभुर्दिवि दिवौकसो भुवि धिनोति नः किङ्करान् ॥

भयानको यथा—

दंष्ट्राकोटिकठोरकूटकटुना ब्रह्माण्डभाण्डस्थितं—
सर्वं चर्वयसीव हन्त वदनेनोद्गीर्णपूर्णत्विषा ।
जिह्वाऽग्रेण समग्रमुग्रमहसा लेलिह्यसे रोदसी
ग्रस्तं मामिह पाहि पाहि भगवन् पार्थोऽप्यपार्थोऽभवम् ॥

अद्भुतो यथा—

चित्रं बतैतदेकेन वपुषा युगपत्पृथक् ।
गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥

युद्धवीरो यथा—

गुणं कर्णाकृष्टं करकिसलयं तूणशिखरे
धनुश्चक्रीभूतं निपतदिषुवृन्दं तत इतः ।
रिपून् भूमौ सुप्तान् कलयति समं देवनिकरे
जरासंधस्याजौ जयति भुजवीर्यं मुरभिदः ॥

दानवीरो यथा—

यजन्ति यज्ञं क्रतुभिर्यमादृता—
भवन्त आम्नायविधानकोविदाः ।
स एव विष्णुर्वरदोऽस्तु वा परो—
दास्याम्यमुष्मै क्षितिमीप्सितां मुने ! ॥

सर्वेष्वेषूदाहरणेषु भगवदालम्बनकत्वेन भक्तिरसः ॥३४॥
मिश्रितत्वप्रसङ्गादमिश्रां रतिं निर्दिशति—शुद्धेति ।

**शुद्धा च वत्सलरतिः प्रेयोरतिरिति त्रयी ॥**
**भावान्तरामिश्रितत्वादमिश्रा रतिरुच्यते ॥३५॥**

स्पष्टैषा कारिका ॥३४॥

उक्तरतिस्थायिकान् रसानाह—विशुद्ध इति ।

विशुद्धो वत्सलः प्रेयानिति भक्तिरसास्त्रयः ॥
रसान्तरामिश्रितास्ते भवन्ति परिपुष्कलाः ॥ ३५ ॥

इतिशब्दो हेतौ, यतो रतिस्त्रिविधा ततो रसा अपि त्रयो-भवन्ति, शुद्धरतिस्थायिको विशुद्धाख्यो, वत्सलरतिस्थायिको-वत्सलाभिधः, प्रेयोरतिस्थायिकः प्रेयोनामा, त्रिविधा रसाः, ते रसा भावान्तरामिश्रितस्थायिकत्वैव रसान्तरामिश्रिता अत-एव परिपुष्कलाः=निसर्गपूर्णस्वभावका इत्यर्थः ।

एषामुदाहरणानि यथा—

तत्र विशुद्धभक्तिरसः—

हरिवल्लभसेवया समन्तादपवर्गानुभवं किलावधीर्य्य ।
घनसुन्दरमात्मनोऽप्यभीष्टं परमं ब्रह्म दिदृक्षते मनो मे ॥

वात्सल्यभक्तिरसः—

सुतमङ्गुलिभिः स्नुतस्तनी चिबुकाग्रे दधती दयाऽऽर्द्रधीः ।
समलालयदालयात् पुरः स्थितिभाजं व्रजराजगेहिनी ॥

प्रेयोभक्तिरसः—

श्रीदामदोर्विलसितेन कृतोऽपि कामं—
दामोदर ! त्वमिह दर्पधुरादरिद्रः ।
सद्यस्त्वया तदपि कत्थनमेव कृत्वा
देव्यै ह्रिये त्रयमदायि जलाञ्जलीनाम् ॥३५॥

वैशिष्ट्यं विवक्षुः सिंहावलोकितकेन पुनः शृङ्गारमाह—शृङ्गेति ।

शृङ्गारो मिश्रितत्वेऽपि सर्वेभ्यो बलवत्तरः ।
तीव्रतीव्रतरत्वं तु रतेस्तत्रैव वीक्ष्यते ॥३६॥

मिश्रितत्वेऽपि कामेनेति शेषः, "तज्जन्यायां द्रुतौ चित्ते" इत्यादिना पूर्वोक्तत्वात् शृङ्गारः सर्वेभ्यः=केवलसंकीर्णमिश्रितस्वेतरकेवलमिश्रितशुद्धेभ्यः, बलवत्तरः=निरतिशयचमत्कारात्मकः, तमपि कर्त्तव्ये तरबुक्तिः शृङ्गारतदितरयोर्निर्धार्य्यतानिरूपकतामाश्रित्य; बोध्या, तादृशत्वे हेतुमाह—तीव्रेति, रतेः संभोगे तीव्रता, विप्रलम्भे तीव्रतरता, उपलक्षणं चैतत् तत्रापि तीव्रतमता पूर्वरागे ज्ञेया, कुतस्त्येयं मधुररतेर्विधेत्यस्य तु नैसर्गिकीत्येवोत्तरं; तदुक्तम्—

"नदीनां ललनानां च भुजङ्गानां तथैव च ।
प्रेम्णां चैव गतिर्वक्रा कारणं तत्र नाप्यते" ॥ इति ॥३६॥

रसानां चातुर्विध्यं दर्शयति—केचिदिति ।

केचित् केवलसंकीर्णाः केचित् संकीर्णमिश्रिताः ।
केचित् केवलमिश्राश्च शुद्धाश्च स्युश्चतुर्विधाः ॥३७॥

तत्र रतेर्भावान्तरयोगे केवलसंकीर्णा रसाः, भावान्तरसंकीर्णत्वे सति भगवद्भिन्नालम्बनकत्वे संकीर्णमिश्रितास्ते, भगवद्विषयकत्वेऽपि भावान्तरयोगे केवलमिश्रितास्ते, भावान्तरासध्रीचीनतायां शुद्धाः, भगवद्विषयकत्वं तत्रानुक्तमपि बोध्यमेव भक्तिरसस्य प्रकरणाद् ॥३७॥

इदमेव विशदयति—तत्रेत्यादिकारिकात्रयेण—

तत्र केवलसंकीर्णा रौद्रो रौद्रभयानकः ।
धर्मवीरो दानवीरो बीभत्सः शान्त इत्यपि ॥३८॥
मिश्रा एवान्यविषयाः प्रोक्ताः संकीर्णमिश्रिताः ।
भगवद्विषयास्ते तु ख्याताः केवलमिश्रिताः ॥३९॥

शुद्धास्त्रयः पुरैवोक्ताः संकीर्य्यन्ते न केन चित् ।
एवं निरूपिता भक्तिः संक्षेपादुच्यते पुनः ॥४०॥

तत्र क्रोधभयोत्साहजुगुप्सानिर्वेदसंयोगतः संकीर्णाः रौद्रादिशान्तान्ता उच्यन्ते, किन्त्वेतैरपि रसत्वेन सालम्बनकैर्भवितव्यमेव, तथा च भगवदालम्बनकत्वे केवलमिश्रिताः, तद्भिन्नालम्बनकत्वे संकीर्णमिश्रिताः, भावान्तरासंपृक्ततादशायामेव भगवद्विषयाः शुद्धाः, एवं प्रभेदाद्यप्रदर्शनपूर्वककथनात्मकात् संक्षेपाद्ध भक्तिरसो निरूपितः, पुनः कथ्यते प्रकारान्तरैरिति शेषः । एवं कारिकात्रयस्य वर्त्तुलार्थोऽत्र ज्ञेयः, उदाहरणानि च केवलमिश्रितानां शुद्धानां च प्रदर्शितान्येव, केवलसंकीर्णानां तु संकीर्णमिश्रितानामेवान्तर्गतानि, एषां तु प्रकृतानुपयोगितया न दर्शितानि, भगद्भिन्नविषयकत्वेन सुज्ञानानि, बहुत्र बहुभिरुक्तान्येवातो जिज्ञासुभिस्तत एव ज्ञेयानि ॥३८–३९–४०॥

तान्येव भक्तेः प्रकारान्तराणि द्वाभ्यामाह—राजसीति ।

राजसी तामसी शुद्धसात्त्विकी मिश्रिता च सा ॥
ईर्ष्याजद्वेषजाऽऽद्या स्याद्ध भयजद्वेषजा परा ॥ ४१ ॥
हर्षजा शुद्धसत्त्वोत्था कामशोकादिजेतरा ॥
सत्त्वजत्वे तु सर्वासां गुणान्तरकृता भिदा ॥ ४२ ॥

पुनर्भक्तिः चतुर्विधा—रजःप्रधाना, तमःप्रधाना, सत्त्वाभिभूतरजस्तमाः, मिश्रिता च, तत्रेर्ष्यातो जाताद्ध द्वेषाज्जाता आद्या=राजसी, भयतो जाताद्ध द्वेषाज्जाता परा=तामसी, हर्षतो जाता तृतीया, कामतः शोकतः आदिपदग्राह्येभ्यः=ईर्ष्याजनकभिन्नभयस्नेहहर्षदयाऽन्तेभ्यो जाता; इतरा=मिश्रिता,

अत्रेदमनुसंधेयं—प्रथमोल्लासे प्रथममौपनिषदप्रस्थानसंमतरसप्रक्रिया, चरमं सांख्यप्रस्थानानुसारिणी तद्रीतिरुक्ता, तत्र प्रथममतेन सार्धकारिकया भक्तिचतुष्टमुक्तं, तुपदेन सांख्यरीतिमाश्रित्याह—सत्त्वेति, यद्यपि सांख्यनये—

"एवं सति सुखाकारः प्रविष्टो मानसे यदे"—

त्यादिनोक्तविधया सर्वासामेव त्रिगुणात्मकतायामप्यभिभूतेतरगुणद्वयीकसत्त्वोद्भूतत्वेन सत्त्वजत्वव्यवहारस्तथाऽपि वृत्त्युदयोत्तरकालोपनिपतितकारणान्तरप्रयुक्तरजस्तमःप्रकटताविशेषसहचरीणां तासां राजसीत्वादिव्यवहारोऽपि सुकरइत्याह—गुणान्तरकृता भिदेति, तथा च तदानीं यदीयं प्राधान्यंतन्नाम्नोल्लेखः "प्रधानेन व्यपदेशा भवन्ती"ति न्यायेनेति निष्कर्षः ॥ ४१ ॥ ४२ ॥

उक्तचतुर्विधभक्तिस्थायिषु वैलक्षण्यमाह—तत्रेति।

**तत्र ते रतितां नैव यातः सुखविरोधतः ॥**
**रतिशब्दं तु भजतः सुखमय्यौ परे द्रुती ॥ ४३ ॥**

तत्र=तासु भक्तिषु, ते=प्रथमोदिष्टे राजसीतामस्यौ रतितां=रतिस्वभावं, नैव यातः=जातमपि न प्राप्नुतः, तत्र हेतुः—सुखवियोगतः—सुखविरोधिदुःखानुशयिनो द्वेषस्योदयो विरुन्ध्यादेव सुखं; न पुनरनुरुन्ध्यादिति भावः, यथाहुर्भगवत्पतञ्जलिपादाः—"सुखानुशयी रागः," दुःखानुशयीद्वेषः," इति, परे चरमोद्दिष्टे तु द्रुती सत्त्वप्राधान्योदिते सत्यौ सुखमय्यावतो रतिशब्दं भजतः=चित्तस्य रमणादन्वर्थतया रतिपदवाच्ये भवत इति भावः ॥४३॥

उक्ताया भक्तेः पुनः प्रकारान्तरैस्त्रैविध्यमाह—भक्तिरिति।

**भक्तिश्चतुर्विधाऽप्येषा भगवद्विषया स्थिरा ॥**
**दृष्टादृष्टोभयैकैकफला भक्तिस्त्रिधा भवेत् ॥ ४४ ॥**

पूर्वोक्तचातुर्विध्याऽप्येषा भक्तिर्भगवद्विषया सती स्थिरा चेद् दृष्टादृष्टोभयफला, दृष्टमात्रफला, अदृष्टमात्रफला, एवं त्रिधा भवेत् ॥ ४४ ॥

अविशिष्योक्तं त्रैविध्यं व्यवस्थापयितुमाह—राजसीति ।

**राजसी तामसी भक्तिरदृष्टफलमात्रभाक् ॥**
**दृष्टादृष्टोभयफला मिश्रिता भक्तिरिष्यते ॥ ४५ ॥**

पूर्वोक्तभक्तिचतुष्टये राजसीतामस्यौ भक्ती केवलमदृष्टफले, मिश्रिता च भक्तिर्दृष्टादृष्टोभयफला भवति ॥ ४५ ॥

उभयफलाया रूपान्तरं स्थलं च दर्शयन् दृष्टफलायाः पात्रमाह—शुद्धेति ।

**शुद्धसत्त्वोद्भवाऽप्येवं साधकेष्वस्मदादिषु ॥**
**दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु ॥ ४६ ॥**

दृष्टादृष्टोभयफला भक्तिः पूर्वोक्तास्तु शुद्धसत्त्वाऽपि भवति, सा चास्मदादिषु=साधकेषु सुखरूपदृष्टफलस्य दुरितनिवृत्त्याद्यभ्युदयनिःश्रेयसादिरूपादृष्टफलस्य चोत्पादिका, दृष्टमात्रफला तु सा सिद्धेषु—निसर्गादाप्तकामेषु सनकादिषु कुमारयोगीन्द्रमहाभागवतेषु; तेषामदृष्टफलोत्पत्तिक्षेत्रताविरहाद्, न च तेषामाप्तकामत्वेन दृष्टफलयोग्यताऽपि न संभवतीति वाच्यम् ? आप्तकामानामपि कर्मनिबन्धनवासनाऽधीनफलकामनाया अभावेऽपि भगवद्भक्तिरसानुबुभूषायां बाधकाभावाद्, यथोक्तं—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥

अयं भावः—बन्धप्रयोजककामना एव हेयपक्षे निक्षिप्ता-न तु बन्धविरोधिन्यः, किं चाप्तकामा न प्राकृतवस्तुभावेन प्रवर्त्तितास्तत् कामयन्ते, परन्तु भजनीयभगवत्स्वरूप एव तादृशी

लोकातीता काचन शक्तिर्या ह्यात्मारामानप्याकर्षति, सिद्धा चेयं धर्मिग्राहकमानतस्तादृशस्वभावेति न पर्य्यनुयोज्यतामर्हति, स्वभावस्यापर्य्यनुयोज्यत्वात् तदुक्तं—श्रीमदक्षपादमहर्षिचरणैः—"दृष्टानुमितानां निषेधपर्य्यनुयोगानुपपत्तिः" इति ॥ ४६ ॥

भक्तेर्दृष्टादृष्टफलकत्वमुपपादयति—दृष्टेति ।

**दृष्टादृष्टफला भक्तिः सुखव्यक्तेर्विधेरपि ॥**
**निदाघदूनदेहस्य गङ्गास्नानक्रिया यथा ॥४७॥**

भक्तेः सुखव्यक्तिः प्रत्यक्षेति दृष्टफलकत्वं, विधेः=भक्तिविधायकशास्त्रतः, तच्च "आत्मेत्येवोपासीते," त्यादिर्भगवती श्रुतिः,

"तस्माद्भारत ! सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयम्'

इति परमहंससंहिताश्रीमद्भागवतादि, न चैतावता विधिस्वगतः फले किमायातमिति वाच्यम् ? अत्रैवाभयस्य फलत्वेन निर्देशाद्, न चैवमस्याधिकारविधित्वेनोत्पत्तिविधित्वायोगात्कथं-भक्तिविधायकत्वमिति वाच्यम्, निर्दिष्टचर्य्याः श्रुतिभगवत्या-एव भक्तिविधायकत्वात्तस्मादुभयफलकत्वं निर्विवादम्, अत्र दृष्टान्तः—निदाघेति,—गङ्गास्नानात्तापनिवृत्त्यादिकं दृष्टफलं-, दुरितध्वंसादिकमदृष्टफलं-चेत्युभयं यथा; तथेहापीति भावः ॥४७॥

राजसीतामस्योरदृष्टमात्रफलकतामुपपादयति—रजेति ।

**रजस्तमोऽभिभूतस्य दृष्टांशः प्रतिबध्यते ॥**
**शीतवातातुरस्येव नादृष्टांशस्तु हीयते ॥४८॥**

रजसा तमसा चाभिभूतस्य=अभिभूतसत्त्वकस्य जनस्य, दृष्टांशः=दृष्टफलभागः, प्रतिबध्यते=निरुध्यते, वर्त्तमानदेहावच्छेदेन क्रियमाणकर्मफलोपभोगं प्रति तद्देहावच्छेदेनेन प्रारब्धकर्मणामसति विरोधिनि प्रतिबन्धकताया उत्सर्गसिद्धत्वा-

दिति तात्पर्यम्, अदृष्टांशः = अदृष्टफलभागः, न तु हीयते = नैव निरुध्यते, भाविशरीरावच्छेदेन भोक्ष्यमाणकर्मफलोपभोगं-प्रति प्रारब्धकर्मणामप्रतिबन्धकत्वादिति भावः, तत्र दृष्टान्तः— शीतेत्यादि, यथा शीतवातादिभिरार्त्तस्य गङ्गास्नाने जन्यमानं-सुखं प्रतिरुध्यते; न तु जनिष्यमाणमामुष्मिकमभ्युदयादिकं-तथेत्यर्थः ॥ ४८ ॥

अदृष्टमात्रफलविरोधः कुत्रेति दर्शयति—तथैवेति ।

तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ॥
स्नात्वा भुक्तवतां भूयो गङ्गायां क्रीडतां यथा ॥४९॥

यथा रजस्तमोऽभिभूतानां दृष्टांशः प्रतिबध्यते; तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते = प्रतिबध्यते, तेषां चरमदेहकतया; चरमदेहध्वंसस्य भाविभोगे प्रतिबन्धकत्वाद्, अथ वा—न विद्यते= नोत्पद्यते, कर्मफलभोगत्वावच्छिन्नं प्रति कर्मजन्यशरीरस्याव-च्छेदकतासंबन्धेन कारणत्वाद्, अन्तिमदेहानां जीवन्मुक्तानां-तु प्रारब्धकर्माधीनदेहत्यागोत्तरं भोगार्हदेहस्यैवाभावाद्, यद्वा समवायेन भोगं प्रति समवायेनादृष्टस्य कारणतया; तेषामदृष्टा-भावाददृष्टफलाभावः, अत्र दृष्टान्तः—स्नात्वेति । स्नातभुक्तवतां-गङ्गास्नानस्यावैधतयाऽपूर्वजनकत्वाभावान्नादृष्टफलप्रयोजकता,दृष्ट-फलं त्वस्त्येव यथा; तथा प्रकृतेऽपि, न च भोजनाद्युत्तरमपि गङ्गास्नानस्योपरागादिप्रयुक्तत्वे वैधत्वं संभवतीति वाच्यम् ? क्रीडतामिति स्नातृविशेषणस्वारस्येन चिक्रीडिषानिबन्धन एव तत्स्नानेऽदृष्टफलानुत्पादकत्वे तात्पर्य्यादिति ॥ ४९ ॥

दृष्टादृष्टे स्वयं निर्वूते—वर्तमानेति ।

वर्तमानतनुप्राप्यं फलं दृष्टमुदाहृतम् ॥
भाविदेहोपभोग्यं यत्तददृष्टमुदीरितम् ॥५०॥

स्पष्टार्थेयं कारिका ॥ ५० ॥

राजस्यां तामस्यां वा भक्तौ रत्यनुद्बोधं विशदयति—रजे-त्यादिद्वाभ्याम् ।

**रजस्तमःप्रचण्डत्वे सुखव्यक्तिरसत्समा ॥**
**तीव्रवायुविनिर्धिप्तदीपज्वालेव भासते ॥५१॥**
**तस्मात्स्वयंप्रभाऽऽनन्दाकाराऽपि मतिसंततिः ॥**
**प्रतिबन्धकवशान्न स्यात्सुखव्यक्तिपदास्पदम् ॥५२॥**

रजस्तमउद्रेके वर्त्तमानाऽपि सुखव्यक्तिः सुखास्वादाप्रतिष्ठानादसत्कल्पा, स्वकार्य्याकरणादिति भावः, यथा प्रखरपवनकम्प्रा प्रदीपशिखा स्वकर्त्तव्यसमुचितवस्तुप्रकाशात्तमाऽसत्समाना तथेयमतः स्वतःप्रकाशसुखात्मिकाऽपि चित्संततिः खलु रजस्तमोऽतिरेकरूपप्रतिबन्धतः सुखात्मतया न भासते, स्वतःप्रकाशत्वसुखरूपत्वे तु विस्तरभिया नेह प्रतायेते महत्याऽरभक्त्याऽन्यत्रोपपादिते तत एवावगन्तव्ये ॥ ५१ ॥ ५२ ॥

रजोऽभिभूतरतेः स्थलमाह—रजइति ।

**रजःप्रबलसत्त्वांशादीर्ष्याजद्वेषमिश्रिता ।**
**मनोवृत्तिः परानन्दे चैद्यस्य न सुखायते ॥५३॥**

रजः प्रबलं यस्मात्तादृशात्सत्त्वांशादुदिताया ईर्ष्यातोजातेन द्वेषेण मिश्रिता मनोवृत्तिः सुखावहा न भवति यथा शिशुपालस्य, उदाहरणं तु पूर्वोक्तमनुसंधेयमिति ॥ ५३ ॥

तमोऽभिभूतरतेः स्थलमाह—तम इति ।

**तमःप्रबलसत्त्वांशाद् भीतिजद्वेषमिश्रिता ।**
**मनोवृत्तिः परानन्दे कंसस्य न सखायते ॥५४॥**

तमः प्रबलं यस्मात्तादृशात्सत्त्वांशादुद्भूताया भीतितो-

जातेन द्वेषेण मिश्रिता मनोवृत्तिरपि सुखावहा न भवति यथा कंसस्य—

आसीनः संविशँस्तिष्ठन् भुञ्जानः पर्यटन्महीम् ॥
चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत् ॥
कंसो; हरेर्वैरानुबन्धकृदिति चानुस्यूते ॥ ५४ ॥

एवं रजस्तमोऽभिभूतसत्त्वस्थले रतेर्दृष्टफलाभावं प्रदर्श्या- दृष्टफलं दर्शयति—तयोरिति ।

**तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति ।**
**सैव चित्तद्रुतिर्भक्तिरसतां प्रतिपद्यते ॥५५॥**

तयोः=चैद्यकंसयोः, भाविशरीरे=भगवद्धस्ततो निधन- सौभाग्यलाभोत्तरलब्धदिव्यदेहे, सति तु प्रतिबन्धक्षये=शापा- दिप्रयुक्तनियतकालादिकैहिकभोगोपयोगिदेहावसाने, सैव= अतिपूर्वं लब्धा, चित्तद्रुतिः=भगवदाकारताऽऽत्मा, स्पष्टमन्यद्ध, अत्र प्रमाणं तु—"भूयो ममान्तिकमितां तदनुग्रहो मे" इत्या- दि "ददर्श चक्रायुधमग्रतो यस्तदेव रूपं दुरवापमाप" इत्यादि च श्रीमद्भागवतादिवचनानि द्रष्टव्यानीति ॥ ५५ ॥

प्रतिबद्धदृष्टफलकभक्तिकाः पूर्वं चैद्यादय एवासन्नैवं बोध्यं,- किन्त्विदानीमपि तादृशा वर्त्तन्त इत्याह—अधुनेति ।

**अधुनाऽपि भजन्तो ये द्वेषात् पाशुपतादयः ।**
**तेषामप्येवमेव स्यादथ वाऽनेन तुल्यता ॥५६॥**

अधुनाऽपि=वर्त्तमानसमयेऽपि, ये भगवति द्वेषवन्तः स्वस्वा- भीष्टं भजन्ते, पाशुपतपदं भगवत्प्रातिकूल्यमाचरतामखिला- नामुपलक्षणम्, आदिशब्दः सदृशपरः, तेषामपि=भगवद्विद्वे- षिणामपि, एवमेव=भगवत्कृपया प्रतिबन्धनिरासे देहान्तर- एव भक्तिसुखानुभूतिः, तुल्यता=भागवतजनकृपातो वा यथा

तत्प्राप्तिः, न चैषां भगवद्भक्तिरेव नासीत्कुतः प्रतिबन्धापगमे तदाविर्भाव इति विचिकित्सितव्यम्,

"येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ॥

तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकमिति"

श्रीमुखवाक्यतस्तेऽपि भगवतो विधिरूपतदाज्ञाविरुद्धप्रकारैस्तमनुसरन्त आज्ञाऽतिक्रमप्रयुक्तापराधजनितभोगोत्तरमनुसरणफलभाजो भवन्तीति तात्पर्य्यादिति ॥ ५६ ॥

भक्तिं प्रति द्रुतेः कारणत्वं दर्शयति—द्रुताविति ।

**द्रुतौ सत्यां भवेद् भक्तिरद्रुतौ तु न किं चन ।**
**चित्तद्रुतेरभावेन वेनस्तु कतमोऽपि न ॥५७॥**

निष्कर्षमाह—द्रुतौ सत्यां भगवद्भक्तिरुदेतुमर्हति, द्रुत्यभावे तु न किमपि दृष्टादृष्टोभयात्मकेष्वन्यतममपि, फलमिति शेषः अत एव वेनः=परमभागवतमहाराजचक्रवर्त्तिपृथोर्जनकः; न कतमोऽपि=सात्त्विकराजसतामसभक्तिमत्सु मध्य इति शेषः ॥ ५७ ॥

फलितमाह—रजेति ।

**रजस्तमोविहीना तु भगवद्विषया मतिः ।**
**सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥५८॥**

उक्तप्रायार्थकत्वेन स्फुटेयं कारिका ॥ ५८ ॥

सुखविशेषाभिव्यञ्जकत्वेन सिद्धाया रतेः स्वरूपमाह—स्नेहेति ।

**स्नेहस्यैव विकारः प्रिययोरत्यन्तभावनादनिशम् ।**
**विरहासहिष्णुताऽऽत्मा प्रीतिविशेषो रतिर्नाम ॥५९॥**

स्नेहस्य=संस्कारताऽऽत्मकानागततां विहायोद्बोधं प्राप्तस्यात एव प्रथमावस्थतयाऽनवाप्तपरिपोषस्य सुखविशेषस्य,

एवपदेन भावान्तरासंसृष्टस्य यो विकार:=परिणाम:, प्रिययो:=स्निग्धयो:—स्ववृत्त्यालम्बनतानिरूपकत्वस्ववृत्त्याश्रयतानिरूपकत्वैतदन्यतरसंबन्धेन वस्तुविशिष्टेन स्नेहेनालम्बनताऽऽश्रयताऽन्यतरसंबन्धेन विशिष्टयोरिति यावद्; इत्थमनुक्तौ यत्किंचिद्विषयकस्नेहाश्रययोरन्योन्यमुदासीनयोर्ग्रहणेऽतिप्रसङ्गः स्यात्; तत्समवेताद्द अनिशम्=धारावाहित्वेन, अत्यन्ताद्द=भावनीयेतरानवगाहिनो, भावनात्=सोत्कण्ठचिन्तनाद्द विरहस्य=अभीष्टविषयकप्रत्यक्षाभावज्ञानस्य, यद्यपि परत्र विरहशब्देनाभावो बुध्यते; किन्तु प्रकृते विशिष्टाभावज्ञानं विवक्ष्यते, ज्ञानानुक्तौ यत्र प्रेमवैचित्त्यादौ तादृशप्रत्यक्षसत्त्वेऽप्यभावबुद्धौ विरहोद्गारोऽनुभवसिद्धस्तत्रानुपपत्तेः, याऽसहिष्णुता=परिहार्य्यत्वप्रकारकदु:खविषयकज्ञानाभावः, तथा च तादृशदु:खकारणे व्यवह्रियमाणे सह्यासह्यत्वे भाक्ते, तदात्मा=तत्प्रवृत्तिनिमित्तकः प्रीतिविशेषो रतिः, एवं च—वस्तुविशिष्टस्नेहविशिष्टव्यक्तिसमवेतविषयान्तरानवगाहिधारावाहिसोत्कण्ठचिन्तनप्रयुक्तोऽभीष्टविषयकप्रत्यक्षाभावप्रयोज्यपरिहार्य्यत्वप्रकारकदु:खविषयकज्ञानाभावविशिष्टः भावान्तरासंसृष्टस्नेहपरिणामप्रीतिविशेषो रतिरिति फलितम्,

स्नेहे वैशिष्ट्यं च—स्ववृत्त्यालम्बनतानिरूपकत्वस्ववृत्त्याश्रयतानिरूपकत्वैतदन्यतरसंबन्धेन, व्यक्तौ वैशिष्ट्यं च—आलम्बनताऽऽश्रयताऽन्यतरसंबन्धेन, प्रीतिविशेषे तादृशाभाववैशिष्ट्यं च स्वाश्रयसमवेतत्वस्वप्रतियोगिज्ञानविषयदु:खप्रयोजकाभावप्रतियोगिप्रत्यक्षविषयाभीष्टविषयकत्वैतदुभयसंबन्धेनेति निष्कर्षः ॥५९॥

रजस्तमोऽपसरणानुसारेण रतेस्तारतम्यमाह —रजेति ।

**रजस्तमःसमुच्छेदतारतम्येन गम्यते ।**
**तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि ॥६०॥**

साधनस्याभ्यासे समानेऽपि रजसस्तमसश्चोच्छेदेऽल्पे रतेरपि सुखावहताऽल्पा, रजसस्तमसश्च तस्मिन्नधिकेऽस्या अप्येषाऽधिका प्रतीयते ॥ ६० ॥

प्रकारान्तरेण रतेरल्पाधिकते दर्शयति—विरह इति ।

विरहे यादृशं दुःखं तादृशी दृश्यते रतिः ।
मृदुमध्याधिमात्रत्वाद् विशेषोऽत्रापि वीक्ष्यते ॥६१॥

वियोगे यत्परिमाणं दुःखमनुभूयते तत्परिमाणा रतिरुदेति, कारणं चात्र द्रुतितारतम्यमेव, विरहतापानुसारिणी चेतोद्रुतिः, तदनुसारिणी च रत्युद्भूतिः, अत्रापि=दुःखानुसारिणि रतितारतम्येऽपि, मृदुतया मध्यतया तीव्रतया विशेषस्तारतम्यमनुभूयते ॥ ६१ ॥

उक्तत्रैविध्यस्य स्थलं दर्शयति—वैकुण्ठ इति ।

वैकुण्ठे द्वारकायां च श्रीमद्वृन्दावने तथा ।
मृदुतीव्रा मध्यतीव्रा तीव्रतीव्रा च सा क्रमात् ॥६२॥

स्पष्टार्थेयं कारिका ॥ ६२ ॥

उक्तत्रैविध्यायाः पुनरष्टौ भेदानाह—इयमिति ।

इयं निसर्गसंसर्गौपम्याध्यात्माभियोगजा ।
संप्रयोगाभिमानाभ्यां समारोपे स्थिता तथा ॥६३॥

इयं=मृदुतीव्रत्वादिभेदवती, निसर्गजा—

"निसर्गः सुदृढाभ्यासजन्यः संस्कारउच्यते"

इत्युक्तलक्षणात्संस्कारविशेषात्मनिसर्गाज्जाता, संसर्गजा-संसर्गः संबन्धः, स च—

"संबन्धः कुलरूपादिसामग्रीगौरवं भवेद्"

इत्युक्तलक्षणात्तस्माज्जाता, औपम्यजा—औपम्यम्=उपमा—

"यथा कथं चिदप्यस्य सादृश्यमुपमोदिता"

इत्युक्तलक्षणादौपम्याज्जाता, अध्यात्मजा—एतस्या एव नामान्तरं स्वरूपजा, तदुक्तं—

"अजन्यस्तु स्वतः सिद्धः स्वरूपं भाव उच्यते"

अस्माज्जाताऽध्यात्मजा, अभियोगजा—

"अभियोगो भवेद्ध भावव्यक्तिः"

इत्युक्ताभियोगजा, संप्रयोगजा—

"संभोगे जायते या तु रतिः सा संप्रयोगजा"

इत्युलक्षणासंप्रयोगजा, अभिमानजा—

"सन्ति भूरीणि रम्याणि प्रार्थ्यं स्यादिदमेव मे।

इति यो निर्णयो धीरैरभिमानः स उच्यते"

इत्युक्तरूपादभिमानाज्जाता, समारोपजा—इयं वैषयिकीनाम्नाऽपि व्यवह्रियते—तत्र

"शब्दस्पर्शादयः पञ्च विषयाः किल विश्रुताः"

इति प्रसिद्धेभ्यो विषयेभ्यो जाता। आसामुदाहरणानि—

तत्र निसर्गजायाः—

असुन्दरः सुन्दरशेखरो वा गुणैर्विहीनो गुणिनां वरो वा।

द्वेषी मयि स्यात्करुणाऽम्बुधिर्वा कृष्णः स एवाद्य गतिर्ममायम्॥

संबन्धजायाः—

वीर्यं कन्दुकिताद्रिरूपमखिलक्ष्मामण्डले मण्डनं—

जन्माभीरपुरन्दरस्य भवने पारेपरार्धं गुणाः।

लीला काऽपि जगच्चमत्कृतिकरीत्येतस्य लोकोत्तरा

वृत्तिर्वेणुधरस्य दुर्मुखि! धृतिं कस्याः क्षणं रक्षति॥

औपम्यजायाः—

नवाम्बुधरमाधुरी स्फुरति मूर्त्तिरुर्वीतले
कृशोदरि! दृशोरियात्पथि किमीदृशो वा युवा।
पुरः सुमुखि! गोपतेः सदसि संनिविष्टस्य मे
पितुर्वितनुते नटो यमनुकृत्य नृत्यक्रमम्॥

अध्यात्मजायाः—

इयं व्यक्तिर्गोपी न भवति पुरः किं तु कुतुकी
हरिर्नारीवेषो यदखिलसुरस्त्रीर्धुवति नः।
जगन्नेत्रश्रेणीतिमिरहरणायाम्बरमणि-
विना कस्यान्यस्य प्रियसखि! भवेदौपयिकता॥

अभियोगजायाः—

मदधरविलुठद्विलोचनान्तं-
मृदुललतानवपल्लवं दशन्तम्।
सखि! हरिमवलोक्य भानुजाया-
स्तटविपिने स्फुटदन्तराऽस्मि जाता॥

संप्रयोगजायाः—

सह्योष्यतामिह प्रेष्ठ! दिनानि कति चिन्मया।
रमस्व नोत्सहे त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण!॥

अभिमानजायाः—

स्फुरन्तु बहवः क्षितौ मधुरिमोर्मिधौरेयकाः-
विदग्धमणयो गुणावलिपतिंवराभिर्वृताः।
न यस्य शिखिचन्द्रकः शिरसि नैव वेणुर्मुखे
न धातुरचना तनौ सखि! तृणाय मन्ये न तम् इति॥६३॥

समारोपजायां विशेषमाह—स्पर्श इति।

**स्पर्शे शब्दे तथा रूपे रसे गन्धे च केवले ।**
**समुच्चिते च सा तत्रेत्येकैका षड्विधा भवेत् ॥६४॥**

केवलात् स्पर्शादितः; समुदितात्तत्पञ्चकाच, तत्र=समारोपे, सा = मृदुतीव्रत्वादिभेदा, एकैका=प्रत्येकमपि, षोढा ज्ञेया ॥

अस्याः क्रमादुदाहरणानि—

स्पर्शजायाः—

व्रजं मुष्टिग्राह्ये तमसि निगिरत्यङ्गमिह मे
सखि ! स्पर्शं दैवाद्यदवधि परं कस्य चिदगात् ॥
गृहीता जागर्या तदवधि सहैवाङ्गजगणैः
सशङ्कैर्या पश्य क्षणमपि न साऽद्याप्युपरता ॥

शब्दजायाः—

एकस्य द्रुतमेव लुम्पति मतिं कृष्णेति नामाक्षरं—
सान्द्रोन्मादपरम्परामुपनयत्यन्यस्य वंशीकलः ॥
एष स्निग्धघनद्युतिर्मनसि मे लग्नः सकृद्वीक्षणा—
त्कष्टं धिक् पुरुषत्रये रतिरभून्मन्ये मृतिः श्रेयसी ॥

रूपजायाः—

कृताकृष्टिक्रीडं किमपि तव रूपं मम सखी
सकृद्दृष्ट्वा दूरादहितहितबोधोज्झितमतिः ।
हताशेयं प्रेमानलमनुविशन्ती सरभसं—
पतङ्गीवात्मानं मुरहर ! मुहुर्दाहितवती ॥

रसजायाः—

पुलकयति यदङ्गं सेवते गात्रभङ्गं—
वहति हृदि तरङ्गं सद्य एवाद्य मुग्धा ।
तदघदमनवक्त्रोद्गीर्णताम्बूलमल्पं—
स्फुटमविदितमास्ये न्यस्तमस्यास्त्वयाऽऽलि ! ॥

गन्धजाया:—

विभ्राजन्ते क्व सखि ! सुखिनः शाखिनो मोहनास्ते
येषां पुष्पैरियमनुपमा वैजयन्ती कृताऽस्ति ।
पश्याकृष्टभ्रमरपटला यातयामाऽपि कामं—
या भूयोभिर्मम परिमलैः स्तम्भयत्यद्य चेतः ॥

समुचितविषयजाया:—

दृष्टः स्वप्नेषु सख्या अपहृतिमकरोः स्वान्तबाह्येन्द्रियाणां—
तस्मादेव क्षणात्सा व्रजपतितनय ! व्याकुलाऽऽस्ते नितान्तम् ।
चक्षू रूपे निमग्नं मृदुलतमतनुस्पर्शभिक्षुस्त्वगासीद्
घ्राणं ते गात्रगन्धे रसनमधरगं स्निग्धवाक्येषु कर्णः ॥
अनयैव दिशा तीव्रतीव्रतरयोरप्युदाहरणानि ज्ञेयानि॥६४॥

उक्ताया भक्तेः पुनर्द्वैविध्यमाह—शुद्धेति ।

**शुद्धा व्यामिश्रिता चेति पुनरेषा द्विधा भवेत् ॥**
**तत्रानुपाधिः शुद्धा स्यात्सोपाधिर्मिश्रितोदिता ॥६५॥**

अत्रोपाधिरन्याभिसन्धिः स चानुपदं स्पष्टीभावी, शेषः स्पष्टः ॥ ६५ ॥

एतयोरनुपाधिं दर्शयति—अन्विति ।

**अनुपाधिः परानन्दमहिमैकनिबन्धना ॥**
**भजनीयगुणानन्त्यादेकरूपैव सोच्यते ॥ ६६ ॥**

परः=साम्यातिशयशून्यो, य आनन्दः तस्य महिमा एकमद्वितीयं निबन्धनं प्रयोजकं यस्या भक्तेः सा, निरुपाधिः, ननु भगवतो गुणानालम्ब्येयं बहुधा भवितुमर्हतीति चेद्‌ ? न—तदीयगुणानामानन्त्यात्तथा गणनाऽसंभविनीत्येकैव वक्तुं सुशकेति ॥ ६६ ॥

सोपाधिं दर्शयन्निरुपाधिं विवृणोति—कामेति ।

**कामसंबन्धभयतः सोपाधिस्त्रिविधा भवेत् ॥**
**विभावादिसमायोगे शुद्धभक्तिरसो भवेत् ॥ ६७ ॥**

पूर्वार्धं स्पष्टमेव, यदा च भक्तिरसस्य विभावादयः समुदीयुः किन्तु भक्तिरसस्थायिनी रतिराश्रयगतभावान्तरेण न संकीर्य्येत तदा शुद्धा भक्तिर्भवेत् ॥ ६७ ॥

निरुपाधिं विवृणोति कारिकाद्वयेन—शृङ्गेत्यादिना ।

**शृङ्गारमिश्रिता भक्तिः कामजा भक्तिरिष्यते ॥**
**संबन्धजा रतिर्याति पूर्वोक्तां रसतां द्वयोः ॥ ६८ ॥**
**एको वत्सलभक्त्याख्यः प्रेयोभक्तिस्तथाऽपरः ॥**
**भयजा रतिरध्यास्ते रसं प्रीतिभयानकम् ॥ ६९ ॥**

अत्र कामजा रतिः पूर्वं दर्शिता, संबन्धजाऽपि सा द्वयोः— वात्सल्यसख्ययोरसयोः, रसतां यातीत्यपि दर्शितम्, प्रेयोभक्तिरसः=सख्यम्, भयकारणजन्यचेतोद्रुत्यात्मा रतिः प्रीतिभयानकाख्यमिश्रितरसस्य स्थायिनी भवतीति भावः॥ ६८, ६९ ॥

तन्मिश्रणे सति वैलक्षण्यमाह—एकेति ।

**एकदा यद्यपि व्यक्तमिदं रतिचतुष्टयम् ॥**
**तदा तु पानकरसन्यायेन परमो रसः ॥ ७० ॥**

यदि तु कारणसामग्रीसमवधानाद्व एकदा कामसंबन्धद्वयभयजानां रतीनां चतुष्टयमेकाश्रय एवोदीयात् तदा तु पानके= समुचितैलामरिचसंयुक्तसितामधुरतमीकृतपानीयविशेषे, रसस्य= रसनाग्राह्यगुणविशेषस्य न्यायेन विलक्षणो रसोऽनुभूयते, तत्र यथा चित्ररसोऽत्रापि तथा चित्ररसोऽनुभवसिद्धो दुरपन्हव— इति हार्दो भावः ॥ ७० ॥

नन्वनेकरतिस्थले यदि पानकरसरीत्या चित्ररस एव स्या-त्तदा रसानां पार्थक्येनास्वादानुपपत्तिरत आह—एकेति।

**एकद्व्यादिरसव्यक्तिभेदाद्रसभिदा भवेत् ॥**
**तस्मात् क चित्तदभ्यासं कुर्याद्रतिचतुष्टये ॥ ७१ ॥**

पृथक् पृथग्रसव्यक्त्या रसानां भेदः सुकरः, तस्मात् क्वापि यत्रान्तर्यामिप्रेरणादिना चित्तमुन्मुखीभवेत् तत्रैवाभ्यासं कुर्यात् साधनेच्छुरिति शेषः, निर्धार्य्यमाणतानिरूपकमाह—रतिचतु-ष्टय इति, अत्रेदमाकूतम्—रतिचतुष्टयपदेनानुपदोक्तानां शुद्धका-मजसंबन्धजभयजानां रतीनां ग्रहणं कर्त्तव्यं, यद्यपि संबन्धजे द्वे रती स्त इति तासां पञ्चतयत्वं तथाऽपि संबन्धजत्वस्य विभा-जकताऽवच्छेदकत्वमाश्रित्य चतुष्टयत्वं संगमयितव्यं, भयशब्दस-मावेशात्तु न भेतव्यमृजुमतिभिः, नात्र व्यालादेरिव भयं विव-क्षितं, परन्तु दासैर्गौरवमर्यादारक्षणसंभ्रमादितो यथा प्रभुतो-भेतव्यं, तादृशमेव निविवेशयिषितम्, एतच्चानुगुणं दास्यस्था-यिन्याः प्रीतेः, तत एव प्रीतिशब्दः संसृष्टः, एवं च पञ्चापि मुख्या भक्तिरसाः संगृहीताः—शुद्धया रत्या शान्तः, भयजयाऽ-नया दास्यम्, संबन्धजया त्वेनया सख्यवात्सल्ये, कामजया तया शृङ्गार इति सुधीभिर्विवेचनीयमिति निखिलं चतुरश्रम् ॥ ७१ ॥

सर्वप्रधानभक्तेषु तच्चतुष्टयं दर्शयन् साधनदिक्प्रदर्शनमुप-दिशति—व्रजेति।

**व्रजदेवीषु च स्पष्टं दृष्टं रतिचतुष्टयम् ॥**
**तच्चित्तालम्बनत्वेन स्वचित्तं तादृशं भवेत् ॥ ७२ ॥**

व्रजदेवीषु रतिचतुष्टयं शास्त्रप्रसिद्धं, ततश्चान्येनापि तत्

सिषाधयिषुणा तासां चित्तमालम्ब्य कृते साधने तादृशचित्त-
ताप्राप्तिस्वरूपयोग्यता शक्यसंपादना, न चैतदप्रमाणकमिति
भ्रमितव्यम् ! पातञ्जलदर्शने हि वीतरागचित्तालम्बिनस्तादृश-
चित्तता सिद्धान्तिता, तुल्ययुक्त्या भगवद्रतिरञ्जितचित्तालम्बनेन
तादृशचित्तताऽपि निर्विवादा, ध्वनितश्चायमर्थो "वीतरागवि-
षयं वा चित्तम्" अस्मिन् प्रकरणे तत्रेति ॥ ७२ ॥

अधुना गौणरतितो रसस्थितिमाह—रसेति ।

**रसान्तरविभावादिसंकीर्णा भगवद्रतिः ॥**
**चित्ररूपवदन्यादृग्रसतां प्रतिपद्यते ॥ ७३ ॥**

हास्यादिविभावादिसमवधाने भगवद्रतिः चित्ररसतां भ-
जति, नानावर्णकसूत्रारब्धचित्रपटवदिति भावः ॥७३॥

अन्यविभावादिराहित्ये कीदृशो रसस्तमाह—रसान्तरेति ।

**रसान्तरविभावादिराहित्ये तु स्वरूपभाक् ॥**
**दशमीमेति रसतां सनकादेरिवाधिकाम् ॥७४ ॥**

अत्र भगवद्रतिरित्यनुवर्त्तते, तथा च रसान्तरविभावादिरा-
हित्ये तु भगवद्रतिः स्वरूपभाक्=भगवत्स्वरूपभाक् सती सन-
कादीनां रतिरिवाधिकामत एव दशमीं रसतां भजते, अत्र
प्राकृतरसेषु व्यवह्रियमाणं नवत्वमपेक्ष्यैवाधिकत्वं दशमत्वं ज्ञेयं,—
न च शान्तेऽन्तर्भावात्कथमधिकत्वमिति शङ्क्यम् ! शान्तस्य
निर्वेदस्थायिकताया एवान्यत्र प्रसिद्धत्वाद्, यदि तु मुख्यरसेषु
शुद्धरतिस्थायिकः शान्तो गृह्येत, तदा दशमत्वोक्तिरसंगता स्यात्,
प्रकृतकारिकायां विभावशब्देनोद्दीपनं ग्राह्यं, भगवत=आलम्ब-
नस्य सर्वत्राद्वितीयतयाऽनुस्यूतत्वात्, तद्राहित्ये हि निरालम्बना
रतिरेव न स्याद्ध दूरे रसताचर्चेति विवेचनीयम् ॥ ७४ ॥

भगवद्विषया रतिर्न रसीभावार्हा; वा स्वसामग्रीपुष्टा न रसत्वेन व्यवहार्य्येति शङ्कां परिहरति—रतिरित्यादिभिश्चतसृभिः कारिकाभिः ।

रतिर्देवादिविषया व्यभिचारी तथोर्जितः ॥
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥ ७५ ॥
देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात् ॥
तद्योज्यं; परमानन्दरूपे न परमात्मनि ॥ ७६ ॥
कान्तादिविषया वा ये रसाद्यास्तत्र नेदृशम् ॥
रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात् ॥ ७७ ॥
परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ॥
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥ ७८ ॥

देवादीत्यत्रादिना पूज्यमित्रपुत्रजातीयानां संग्रहः, ऊर्जितो-व्यञ्जनया प्रत्यायितो व्यभिचारी, जीवत्वात्=क्षुद्रानन्दात्मकत्वात्, तस्य तथात्वमौपाधिकं वास्तविकं वेत्यन्यदेतद्, ईदृशम्=पूर्णानन्दस्वभावम्, परिपूर्णरसा=परिपूर्णरसीभवनार्हा, अन्यत्सर्वमतिरोहितम् ॥ ७५—७८ ॥

उक्तापत्तिं प्रतिबन्द्याऽपि परिहरन्नुल्लासमुपसंहरति—क्रोधेत्यादिना द्वाभ्याम् ।

क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम् ॥
रसत्वमभ्युपगतं तथाऽनुभवमात्रतः ॥ ७९ ॥
इहानुभवसिद्धेऽपि सहस्रगुणितो रसः ॥
जडेनेव त्वया कस्मादकस्मादपलप्यते ॥ ८० ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमधुसूदनसरस्वतीविरचिते भगवद्भक्तिरसायने भक्तिविशेषप्रतिपादको नाम द्वितीयोल्लासः ।

ये साक्षात् सुखप्रतिकूलाः क्रोधादयः, तेषां रसत्वं विभावादिव्यापारसाधारणीकरणानुभवगृह्यतयाऽभ्युपगतं यदि, तर्हि भगवतीनां श्रुतीनाम् "एतस्यैवानन्दस्यान्य आनन्दा मात्रामुपजीवन्ती"त्येवंजातीययथार्थानुभवसहस्रसिद्धे साम्यातिशयरहितपरिपूर्णानन्दरूपे भगवति रते रसता सहसाऽज्ञेनेव कुतो निवार्य्यते रसज्ञंमन्येन त्वया, तस्मादुक्तनिवारणमप्रामाणिकमिति भावः ॥ ७९—८० ॥

इति श्रीमन्माध्वसंप्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्नगोस्वामिश्रीदामोदरशास्त्रिविरचितायां भक्तिरसायनव्याख्यायां प्रेमप्रपायां भक्तिविशेषप्रतिपादको नाम द्वितीयोल्लासः



## अथ श्रीमधुसूदनसरस्वतीविरचितभाक्तिरसायनस्य

प्रेमप्रपासहितो-

भक्तिरसप्रतिपादकः

## तृतीय उल्लासः ।

श्रीश्रीगौरकृष्णः शरणम् ।

एवं कारिकाणामशीत्या ग्रन्थकारो भक्तेः स्वरूपविशेषान् प्रदर्श्य; क्रमायातं भक्तिरसं प्रतिपादयितुं तृतीयमुल्लासमारभमाणः प्रथमं रसस्वरूपादिकं निरूपयितुकामः पृच्छति-नन्विति ।

**ननु कोयं रसो नाम किंनिष्ठो वा भवेदसौ ।**
**अस्य प्रत्यायकः को वा प्रतीतिरपि कीदृशी ॥ १ ॥**

नन्विति वाक्यारम्भे;

"वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञयोरयीति हैमः, न तु प्रश्ने तस्य किंशब्दशक्त्यैव लाभाद्, अयं=वर्णनीयत्वेन संनिकृष्टः, नामेति प्रसिद्धौ-

"नाम प्राकाश्यसंभाव्यक्रोधोपशमकुत्सने" इत्यमरः, तथा च प्रसिद्धोऽयं रसः कः? किंनिष्ठो वा? अस्य का वा बोधकः? प्रतीतिश्च कीदृगिति ॥ १ ॥

तत्र प्रथमप्रश्नमुत्तरयति-विभेति ।

**विभावैरनुभावैश्च व्यभिचारिभिरप्युत ।**
**स्थायी भावः सुखत्वेन व्यज्यमानो रसः स्मृतः ॥ २ ॥**

भावश्च पूर्वोक्तसंस्कारात्मा रत्याख्यः, तस्य स्थायित्वं-सजातीयैर्विजातीयैर्वाऽनुपमर्द्यत्वं, तदुक्तम्—

"सजातीयैर्विजातीयैरतिरस्कृतमूर्त्तिमान् ।
यावद्रसं वर्त्तमानः स्थायी भाव उदाहृतः" ॥

अयमेव भावो विभावैरनुभावैर्व्यभिचारिभिः सुखरूपतया प्रतीयमानो रस उच्यते, तत्र विभावयति=वासनाऽऽत्मतथा स्थितां रतिमास्वादाङ्कुरयोग्यतां नयति, इति विभाव आलम्बनत्वेनोद्दीपनत्वेन द्विविधः, तदुक्तम्—

"विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ।
विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः" ॥

तत्रालम्बनो यथा—

अयं कम्बुग्रीवः कमलकमनीयाक्षिपटिमा
तमालश्यामाङ्गद्युतिरतितरां छत्रितशिराः ।
दरश्रीवत्साङ्कः स्फुरदरिदराद्यङ्कितकरः
करोत्युच्चैर्मोदं मम मधुरमूर्त्तिर्मधुरिपुः ॥

उद्दीपनो यथा—

ध्यानं बलात् परमहंसकुलस्य भिन्दन्
निन्दन् सुधामधुरिमाणमधीरधर्मा ।
कन्दर्पशासनधुरां मुहुरेव शंसन्
वंशीध्वनिर्जयति कंसनिषूदनस्य ॥

अनु पश्चात् स्थाय्युद्बोधानन्तरं भावयति=स्थायिनमास्वादयतीत्यनुभावः, अयमपि स्वाभाविकत्वौपाधिकत्वाभ्यां द्विधा, तत्र पूर्वधर्माक्रान्ताः सात्त्विका उच्यन्ते, परधर्माक्रान्ता अनुभावाः—तदुक्तम्—

"ते स्तम्भस्वेदरोमाञ्चाः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥

तथा—

"स्मितं गीतं कटाक्षश्च भुजक्षेपश्च हुंकृतिः ।
तनुमोटनजृम्भाऽऽदिश्चानुभावः प्रकीर्त्त्यते" इति च,

तत्र सात्त्विकीया दिग्यथा—

कुन्दैर्मुकुन्दाय मुदा सृजन्ती
स्रजं वरां कुन्दविडम्बिदन्ती ।
बभूव गान्धर्वरसेन वेणो—
र्गान्धर्विका स्पन्दनशून्यगात्री ॥

अपरा यथा—

रागडम्बरकरम्बितचेताः
कुर्वती तव नवं गुणगानम् ।
गोकुलेन्द्र ! कुरुते जलतां सा
राधिकाऽद्य सुहृदां दृषदां च ॥

विशेषेणाभिमुख्येन चरन्तीति व्यभिचारिणः, तदुक्तम्—

"विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ" इति,

ते च—

"निर्वेदग्लादिशङ्काऽऽख्यास्तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥
सुप्तिर्विबोधोऽमर्षश्चावहित्थस्तथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावा रसस्य सहकारिणः ॥

तत्र निर्वेदः—

महार्त्तिविप्रयोगेर्ष्यासद्विवेकादिकल्पितम् ।
स्वावमाननमेवात्र निर्वेद इति कथ्यते ॥
अत्र चिन्ताऽश्रुवैवर्ण्यदैन्यनिश्वसितादयः ।

यथा—

भवतु माधवजल्पमशृण्वतोः
श्रवणयोरलमश्रवणिर्मम ।
तमविलोकयतोरविलोकनिः
सखि ! विलोकनयोस्तु किलानयोः ॥

ग्लानिः—

ओजः सोमात्मकं देहे बलपुष्टिकृदस्य तु ।
क्षयाच्छ्रमाधिरत्याद्यैर्ग्लानिर्निष्प्राणता मता ॥
कम्पाङ्गजाड्यवैवर्ण्यकार्श्यदृग्भ्रमणादिकृत् ।

यथा—

गुम्फितुं निरुपमां वनस्रजं—
चारुपुष्पपटलं विचिन्वती ।
दुर्गमे क्लमभरातिदुर्बला
कानने क्षणमभून्मृगेक्षणा ॥

शङ्का—

स्वीयचौर्य्यापराधादेः परक्रौर्यादितस्तथा ।
स्वानिष्टोत्प्रेक्षणं यत्तु सा शङ्केत्यभिधीयते ॥
अत्रास्यशोषवैवर्ण्यदिक्प्रेक्षालीनताऽऽदयः ।

यथा—

सतर्णकं डिम्भकदम्बकं हरन्
सदम्भमम्भोरुहसम्भवस्तदा ।

तिरोभविष्यन् हरितश्चलेक्षणै—
रष्टाभिरष्टौ हरितः समीक्षते ॥

असूया—

द्वेषः परोदयेऽसूया स्यात् सौभाग्यगुणादिभिः ।
तत्रेर्ष्याऽनादराक्षेपा दोषारोपो गुणेष्वपि ॥
अपवृत्तिस्तिरोवीक्षा भ्रुवोर्भङ्गुरताऽऽदयः ।

यथा—

अस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ।
यैकाऽपहृत्य गोपीनां धनं भुङ्क्तेऽच्युताधरम् ॥

मदः—

विवेकहर उल्लासो मदः स द्विविधो मतः ।
मधुपानभवोऽनङ्गविक्रियाभरजोऽपि च ॥
गत्यङ्गवाणीस्खलनदृग्घूर्णारक्तिमादिकृत् ।

यथा—

भभभ्रमति मेदिनी लललम्बते चन्द्रमाः
कृकृष्ण ! ववद द्रुतं हहहसन्ति किं वृष्णयः ।
सिसीधु मुमुमुञ्च मे पपपपानपात्रे स्थितं—
मदस्खलितमालपन् हलधरः श्रियं वः क्रियात् ॥

श्रमः—

अध्वनृत्यरताद्युत्थः खेदः काम इतीर्य्यते ।
निद्रास्वेदाङ्गसंमर्दजृम्भाश्वासादिभागसौ ॥

यथा—

तासां रतिविहारेण श्रान्तानां वदनानि सः ।
प्रामृजत् करुणः प्रेम्णा शन्तमेनाङ्ग ! पाणिना ॥

आलस्यम्—

सामर्थ्यस्यापि सद्भावे क्रियाऽननुन्मुखता हि या ।
तृप्तिश्रमादिसंभूता तदालस्यमुदीर्यते ॥
अत्राङ्गभङ्गो जृम्भा च क्रियाद्वेषोऽक्षिमर्दनम् ।
शय्याऽऽसनैकप्रियतातन्द्रानिद्राऽऽदयोऽपि च ॥

यथा—

सुष्ठु निःसहतनुः सुबलोऽभूत् प्रीतये मम विधाय नियुद्धम् ।
मोटयन्तमभितो निजमङ्गं नाहवाय सहसाऽऽह्वयताम्मुम् ॥

दैन्यम्—

दुःखत्रासापराधाद्यैरनौर्जित्यं तु दीनता ।
चाटुकृन्मान्द्यमालिन्यचिन्ताऽऽङ्गजडिमादिकृत् ॥

यथा—

अभिद्रवति मामीश ! शरस्तप्तायसः प्रभो ! ।
कामं दहतु मां नाथ ! मा मे गर्भो निपात्यताम् ॥

चिन्ता—

ध्यानं चिन्ता भवेदिष्टानाप्त्यनिष्टाप्तिनिर्मितम् ।
श्वासाधोमुख्यभूलेखवैवर्ण्योन्निद्रता इह ॥
विलापोत्तापकृशता बाष्पदैन्यादयोऽपि च ।

यथा—

कृत्वा मुख्यान्यवशुचः श्वसनेन शुष्य—
द्बिम्बाधराणि चरणेन भुवं लिखन्त्यः ।
अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि
तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥

मोहः —

मोहो हृन्मूढता हर्षाद्विश्लेषाद्भ भयतस्तथा ।
विषादादेश्च; तत्र स्याद्देहस्य पतनं भुवि ॥
शून्येन्द्रियत्वं भ्रमणं तथा निश्चेष्टताऽऽदयः ।

यथा—

कृष्णं महावकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः ।
बभूवुरिन्द्रियाणीव विना प्राणान् विचेतसः ॥

स्मृतिः—

या स्यात् पूर्वानुभूतार्थप्रतीतिः सदृशेक्षया ।
दृढाभ्यासादिना याऽपि सा स्मृतिः परिकीर्त्तिता ॥
भवेदत्र शिरःकम्पो भ्रूविक्षेपादयोऽपि च ॥

यथा—

विलोक्य श्याममम्भोदमम्भोरुहविलोचना ।
स्मारं स्मारं मुकुन्दं सा स्मारं विक्रममन्वभूत् ॥

धृतिः —

धृतिः स्यात् पूर्णताज्ञानदुःखाभावोत्तमाप्तिभिः ।
अप्राप्तातीतनष्टार्थानभिसंशोचनादिकृत् ॥

यथा—

हरिलीलासुधासिन्धोस्तटमप्यधितिष्ठतः ।
मनो मम चतुर्वर्गं तृणायापि न मन्यते ॥

व्रीडा—

नवीनसङ्गमाकार्य्यस्तवावज्ञाऽऽदिना कृता ।
अधृष्टता भवेद्व व्रीडा तत्र मौनं विचिन्तनम् ॥
अवगुण्ठनभूलेखौ तथाऽधोमुखताऽऽदयः ।

यथा—

गोविन्दे स्वयमकरोः सरोजनेत्रे !
प्रेमान्धा वरवपुरर्पणं सखि ! त्वम्
कार्पण्यं न कुरु दरावलोकदाने
विक्रीते करिणि किमङ्कुशे विवादः ॥

चपलता—

रागद्वेषादिभिश्चित्तलाघवं चापलं भवेत् ।
तत्राविचारपारुष्यस्वच्छन्दाचरणादयः ॥

यथा—

श्वो भाविनि त्वमजितोद्वहने विदर्भान्
गुप्तः समेत्य पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेशबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्य्यशुल्काम् ॥

हर्षः—

अभीष्टेक्षणलाभादिजाता चेतःप्रसन्नता ।
हर्षः स्यादिह रोमाञ्चः स्वेदोऽश्रुमुखफुल्लता ॥
आवेगोन्मादजडतास्तथा मोहादयोऽपि च ।

यथा—

तत्रैकांऽसगतं बाहुं कृष्णस्योत्पलसौरभम् ।
चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥

आवेगः—

चित्तस्य संभ्रमो यः स्यादावेगोऽयं स चाष्टधा ।
प्रियाप्रियानलमरुद्वर्षोत्पातगजारितः ॥
प्रियोत्थे पुलकः सान्त्वं चापल्याभ्युद्गमादयः ।

यथा—

प्रेक्ष्य वृन्दावनात् पुत्रमायान्तं प्रस्नुतस्तनी ।
संकुला पुलकैरासीदाकुला गोकुलेश्वरी ॥

जडता—

जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टश्रुतीक्षणैः ।
विरहाद्यैश्च तन्मोहात् पूर्वावस्थाऽपराऽपि च ॥
अत्रानिमिषतातूष्णींभावविस्मरणादयः ।

यथा—

गोविन्दं गृहमानीय देवदेवेशमादृतः ।
पूजायां नाविदत् कृत्यं प्रमोदोपहतो नृपः ॥

गर्वः—

सौभाग्यरूपतारुण्यगुणसर्वोत्तमाश्रयैः ।
इष्टलाभादिना चान्यहेलनं गर्व ईर्यते ॥
तत्र सोल्लुण्ठवचनं लीलाऽनुत्तरदायिता ।
स्वाङ्गेक्षा निन्हवोऽन्यस्य वचनाश्रवणादयः ॥

यथा—

हस्तमुत्क्षिप्य यातोऽसि बलात् कृष्ण ! किमद्भुतम् ।
हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ॥

विषादः—

इष्टानवाप्तिप्रारब्धकार्यासिद्धिविपत्तितः ।
अपराधादितोऽपि स्यादनुतापो विषण्णता ॥
अत्रोपायसहायानुसन्धिश्चिन्ता च रोदनम् ।
विलापश्वासवैवर्ण्यमुखशोषादयोऽपि च ॥

यथा—

पश्येश मेऽनार्य्यमनन्त आद्ये
परात्मनि त्वय्यपि मायिमायिनि ।

मायां वितत्येक्षितुमात्मवैभवं-
ह्यहं कियानैच्छमिवार्चिरग्नौ ॥

औत्सुक्यम्—

कालाक्षमत्वमौत्सुक्यमिष्टेक्षाऽऽप्तिस्पृहाऽऽदिभिः।
मुखशोषत्वराचिन्तानिश्वासास्थिरताऽऽदिकृत् ॥

यथा—

प्राप्तं निशम्य नरलोचनपानपात्र-
मौत्सुक्यविश्लथितकेशदुकूलबन्धाः।
सद्यो विसृज्य गृहकर्म पतींश्च तल्पे-
द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥

निद्रा—

चिन्ताऽऽलस्यनिसर्गक्लमादिभिश्चित्तमीलनं निद्रा।
तत्राङ्गभङ्गजृम्भाजाड्यश्वासादिमीलनानि स्युः ॥

यथा—

संक्रान्तधातुचित्रा
सुरतान्ते सा नितान्ततान्ताऽद्य।
वक्षसि निक्षिप्ताङ्गी
हरेर्विशाखा ययौ निद्राम् ॥

अपस्मारः—

दुःखोत्थधातुवैषम्यादद्भुतश्चित्तविप्लवः।
अपस्मारोऽत्र पतनं धावनास्फोटनभ्रमाः ॥
कम्पः फेनस्रुतिर्बाहुक्षेपविक्रोशनादयः।

यथा—

फेनायते प्रतिपदं क्षिपते भुजोर्मि—
माघूर्णते लुठति कूजति लीयते च।

अम्बा तवाद्य विरहे चिरमम्बुराज-
वेलेव वृष्णितिलक ! व्रजराजराज्ञी ॥

स्वप्नः—

सुप्तिर्निद्रा विभावा स्यान्नानाऽर्थानुभवात्मिका ।
इन्द्रियोपरतिश्वासनेत्रसंमीलनादिकृत् ॥

यथा—

कामं तामरसाक्ष ! केलिरभितः प्रादुष्कृता शैशवी
दर्पः सर्पपतेस्तदस्य तरसा निर्धूयतामुद्धुरः ।
इत्युत्स्वप्नगिरा चिराद्‌ यदुसभां विस्माययन् स्माययन्
निःश्वासेन दरोत्तरङ्गदुदरं निद्रां गतो लाङ्गली ॥

विबोधः—

अविद्यामोहनिद्राऽऽदेर्ध्वंसाद्बोधः प्रबुद्धता ।

यथा—

विन्दन् विद्यादीपिकां स्वस्वरूपं-
बुद्ध्वा सद्यः सत्यविज्ञानरूपम् ।
निष्प्रत्यूहं तत् परं ब्रह्म मूर्त्त-
सान्द्रानन्दाकारमन्वेषयामि ॥

अमर्षः—

अधिक्षेपापमानादेः स्यादमर्षोऽसहिष्णुता ।
तत्र स्वेदः शिरःकम्पो विवर्णत्वं विचिन्तनम् ॥
उपायान्वेषणाक्रोशवैमुख्योत्ताडनादयः ॥

यथा—

निर्धौतानामखिलधरणीमाधुरीणां धुरीणा
कल्याणी मे निवसति वधूः पश्य पार्श्वे नवोढा ।
अन्तर्गोष्ठे चटुल ! नटयन्नत्र नेत्रत्रिभागं—
निःशङ्कस्त्वं भ्रमसि भविता नाकुलत्वं कुतो मे ॥

अवहित्थम्—

अवहित्थाऽऽकारगुप्तिर्भवेद्‌ भावेन केन चिद्‌ ।
अत्राङ्गादेः पराऽभ्यूहः स्थानस्य परिगूहनम्‌ ॥
अन्यत्रेक्षा वृथा चेष्टा वाग्भङ्गीत्यादयः क्रियाः ।

यथा—

सात्राजितीसदनसीमनि पारिजाते
नीते प्रणीतमहसा मधुसूदनेन ।
द्राघीयसीमपि विदर्भभुवस्तदेर्ष्यां—
सौशील्यतः किल न कोऽपि विदाम्बभूव ॥

उग्रता—

अपराधदुरुक्त्यादिजातं चण्डत्वमुग्रता ।
वधबन्धशिरःकम्पभर्त्सनोत्ताडनादिकृत्‌ ॥

यथा—

स्फुरति मयि भुजङ्गीगर्भविभ्रंसिकीर्त्तौ
विरचयति मदीशे किल्बिषं कालियोऽपि ।
हुतभुजि बत कुर्यां जाठरे वौषडेनं—
सपदि दनुजहन्तुः किन्तु रोषाद्बिभेमि ॥

मतिः—

शास्त्रादीनां विचारोत्थमर्थनिर्धारणं मतिः ।
अत्र कर्त्तव्यकरणं संशयभ्रमयोश्छिदा ॥
उपदेशश्च शिष्याणामूहापोहादयोऽपि च ।

यथा—

व्यामोहाय चराचरस्य जगतस्ते ते पुराणागमा—
स्तां तामेव हि देवतां परमिकां जल्पन्तु कल्पावधि ।
सिद्धान्ते पुनरेक एव भगवान्‌ विष्णुः समस्तागम—
व्यापारेषु विवेचनव्यतिकरं नीतेषु निश्चीयते ॥

व्याधिः—

दोषोद्रेकवियोगाद्यैर्व्याधयस्तु ज्वरादयः ।
अत्र स्तम्भः श्लथाङ्गत्वं श्वासोत्तापक्रमादयः ॥

यथा—

तव चिरविरहेण प्राप्य पीडामिदानीं—
दधदुरुजडिमानि ध्मापितान्यङ्गकानि ।
श्वसितपवनधाटीदाहितप्राणवाटं—
लुठति धरणिपृष्ठे गोष्ठवाटीकुटुम्बम् ॥

उन्मादः—

उन्मादो हृद्भ्रमः प्रौढानन्दापद्विरहादिजः ।
अत्राट्टहासनटनं संगीतं व्यर्थचेष्टितम् ॥
प्रलापधावनक्रोशविपरीतक्रियाऽऽदयः ॥

यथा—

गायन्त्य उच्चैरमुमेव संहता—
विचिक्युरुन्मत्तकवद्व वनाद्वनम् ।
पप्रच्छुराकाशवदन्तरं बहि—
र्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥

मरणम्—

विषादव्याधिसंत्राससंप्रहारक्लमादिभिः ।
प्राणत्यागो मृतिस्तस्यामव्यक्ताक्षरभाषणम् ॥
विवर्णगात्रताश्वासमान्द्यहिक्काऽऽदयः क्रियाः ।

यथा—

अनुल्लासश्वासा मुहुरसरलोत्तानितदृशो—
विवृण्वन्तः काये किमपि नववैवर्ण्यमभितः ।
हरेर्नामाव्यक्तीकृतमलघु हिक्कालहरिभिः
प्रजल्पन्तः प्राणान् जहति मथुरायां सुकृतिनः ॥

त्रासः—

त्रासः क्षोभो हृदि तडिद्घोरसत्त्वोग्रनिस्वनैः ।
पार्श्वस्थालम्बरोमाञ्चकम्पस्तम्भभ्रमादिकृत् ॥

यथा—

बाढं निबिडया सद्यस्तडिता ताडितेक्षणः ।
रक्ष कृष्णेति चुक्रोश कोऽपि गोपीस्तनन्धयः ॥

वितर्कः—

विमर्शात् संशयादेश्च वितर्कस्तूह उच्यते ।
एष भ्रूक्षेपणशिरोऽङ्गुलिसंचालनादिकृत् ॥

यथा—

असौ किं तापिच्छो न हि यदमलश्रीरिह गतिः
पयोदः किं वाऽयं न यदिह निरङ्को हिमकरः ।
जगन्मोहारम्भो गुरुमधुरवंशीध्वनिरितो—
ध्रुवं मूर्धन्यद्रेर्विधुमुखि ! मुकुन्दो विहरति ॥ इति ॥

अत्र च "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति"—रिति पारमर्षसूत्रं प्रमाणमवगन्तव्यम्, विस्तरस्त्वस्य "सरसः केचि" दित्यत्र प्रदर्शयिष्यते ॥२॥

संप्रति किंनिष्ठो वेति द्वितीयप्रश्नमुत्तरयति—सुखेति ।

**सुखस्यात्मस्वरूपत्वात्तदाधारो न विद्यते ॥**
**तद्व्यञ्जिकाया वृत्तेस्तु सामाजिकमनः प्रति ॥३॥**

रसात्मकस्य सुखस्य "रसो वै सः" रसं ह्येवायं लब्ध्वाऽऽ—नन्दीभवति" "एष ह्येवानन्दयाति" इत्यादयो भगवत्यः श्रुतयः परमात्मनो रसरूपत्वं संगिरन्ते, अतश्चात्मन एव जगदाधारता "कुक्षिस्थाखिलभुवनमि"त्याद्यागमैरवधारिता, तदाधारस्य वास्तविकस्याप्रसिद्धेराह—"तदाधारो न विद्यते" इति

तुशब्देन मुख्यतदाधाराप्रसिद्धावपि तद्व्यञ्जकवृत्त्याधारस्य गौणतदाधारत्वं तु सुवचमिति सूचयन्नाह—सामेति, तथा च वृत्तेरित्यत्र षष्ठ्यर्थस्य निरूपितत्वस्याधारतायामन्वयात्ः तद्व्यञ्जकव्यक्तिनिरूपिताधारता तु सामाजिकमनसीति भावः, मनः-शब्दोत्तरं द्वितीया च प्रतियोगनिबन्धनेति ज्ञेयम्।

अत्र यद्यपि तच्छब्देन रसस्यैव परामर्शः किन्तु रसस्य स्वयं-प्रकाशत्वेन वृत्तिफलव्याप्यता स्थायिनि विवक्षितेति तद्व्यञ्जि-केत्यत्र स्थायिव्यञ्जिकेत्यर्थे तात्पर्यं पर्यवस्यति, सामाजिकशब्देन चानुकार्यानुकर्तृगतत्वं रसस्यानभिमतमिति सूचितं; परन्तु प्राकृ-तस्थलीयेयं व्यवस्थेति तु न विस्मर्त्तव्यम्, अप्राकृतस्थले तु रसात्मैवानुकार्य्य इति विशेषः ॥३॥

इदानीं स्थायिनो लौकिकालौकिकत्वे व्यवस्थापयति—काव्येति—

**काव्यार्थनिष्ठा रत्याद्याः स्थायिनः सन्ति लौकिकाः ॥**
**तद्बोद्धृनिष्ठास्त्वपरे तत्समा अप्यलौकिकाः ॥४॥**

काव्ये योऽर्थो वर्णनीयोऽभिनेयो वा तन्निष्ठा रत्यादयो—लौकिकाः लोकसिद्धनियमानुसारिणः सुखकारणसहकृताः सुख-जननस्वभावाः; दुःखकारणसहकृता दुःखजननस्वभावा इति यावद्, अयमपि नियमः प्राकृतस्थलीय एवावधार्य्यः ।

रसानुभवितृसामाजिकनिष्ठास्त्वपरे समानविषयकत्वादिना तत्तुल्या अपि किलालौकिका उच्यन्ते ॥४॥

उक्तवैषम्ये बीजमाह—बोध्येति ।

**बोध्यनिष्ठा यथास्वं ते सुखदुःखादिहेतवः ॥**
**बोद्धृनिष्ठास्तु सर्वेऽपि सुखमात्रैकहेतवः ॥५॥**

ते=स्थायिनो रतिक्रोधादयः, बोध्यनिष्ठाः=वर्णयितव्या-

भिनेतव्यनिष्ठाः; यथास्वं=सुखजननस्वभावाः सुखहेतवः; दुःख-जननस्वभावा दुःखहेतवो भवन्ति लोकनियमाक्रान्ततया न तं व्यभिचरन्तीत्यर्थः, सर्वेऽपि पुनः सामाजिकवृत्तयः केवलसुख-जनकाः, अयमत्राभिसंधिः—लोके हि पुत्रादेर्जन्मादीनां सुख-कारणत्वं तस्य मरणादीनां दुःखकारणत्वं च यदानुभविकं तन्न पुत्रसामान्यस्य; किन्तु स्वनिरूपितत्वविशिष्टत्वेन ज्ञातस्यैव, शत्रुपुत्रादेस्तेषां प्रत्युत व्यत्ययेन तथात्वदर्शनाद्, काव्ये तु धर्मि-ग्राहकमानसिद्धस्य व्यक्तिविशेषनिरूपितत्वादिप्रमोषणात्मकसा-धारणीकरणव्यापारस्य महिम्ना दुःखप्रयोजकविशेषांशाभाना-न्नैव दुःखाधायकता, न च तुल्ययुक्त्या सुखप्रयोजकविशेषांशा-भानस्यापि प्रतिबन्धात्सुखाधायकताऽपि कथंकारं स्यादिति वाच्यम्, प्रमोषस्य फलबलकल्प्यत्वेन दुःखाननुभवात्तत्प्रमोषः कल्प्यते, सुखानुभवाद् निधुवनसहचराधरक्षतादिवत् तत्प्रमोषा-स्वीकाराद्, अथ वा मा भूदेवान्तःकरणजं सुखं, साधारणीकर-णव्यापृतित एव भग्नावरणचिदात्मकरसस्यैवानन्दात्मकतयोल्ला-सात्सुखसाक्षात्कृतेरवर्जनीयत्वाद्, दुःखप्रत्ययस्तु कुतस्त्यः स्याद्, विगलितवेद्यान्तरसंपर्कस्यापि रसेऽनुभवसिद्धतया तद्भाना-योग्यत्वाच्चेति साधूक्तं सुखमात्रैकहेतव इति ॥ ५ ॥

उक्तमर्थं विशदयति—अत इति ।

अतो न करुणादीनां रसत्वं प्रतिहन्यते ।
भावानां बोद्धृनिष्ठानां दुःखाहेतुत्वनिश्चयात् ॥६॥

सामाजिकनिष्ठानां भावानां=स्थाय्यादीनां यतो दुःखजनका-भावस्य निश्चयोऽतः करुणभयानकादीनां रसत्वं न विरुध्यते, अन्यथा तेषामनुभवार्थं जनानां साग्रहा प्रवृत्तिर्नोपपद्येत; प्रवृत्ति-प्रतीष्टसाधनत्वज्ञानस्य कारणत्वादिति भावः ॥६॥

भावप्रसङ्गतो विभावतायोग्यं वस्तु निर्दिशति—तत्रेति ।

तत्र लौकिकरत्यादेः कारणं लौकिकं तु यत् ॥
काव्योपदर्शितं तत्तु विभाव इति कथ्यते ॥७॥

तेषु भावेषु लौकिकरत्यादेर्यत् कारणं लोके विषयतासंबन्धेनेति शेषः, तदेव काव्येषूपदर्शितं वर्णितम्; अभिनीतं च विभाव इति कथ्यते; विभावयति साधारणीकरोतीति व्युत्पत्त्येत्यर्थः ॥७॥

क्रमिकमनुभावतायोग्यं तन्निर्दिशति—लौकिकेति ।

लौकिकस्यैव रत्यादेर्लोके यत् कार्यमीरितम् ॥
काव्योपदर्शितं तत्स्यादनुभावपदास्पदम् ॥८॥

लोक एव व्यवहृतस्य रत्यादेर्यत् कार्य्यं भ्रूविक्षेपकटाक्षादि तदेव काव्येष्वनुभावपदवाच्यं भवेदलौकिकानुभावनव्यापारवत्त्वादिति भावः ॥८॥

व्यभिचारितायोग्यं तन्निर्दिशति— लौकिकस्यैवेति ।

लौकिकस्यैव रत्यादेर्ये भावाः सहकारिणः ॥
काव्योपदर्शितास्ते तु कथ्यन्ते व्यभिचारिणः ॥९॥

लोकोत्पन्नरत्यादीनां सहकारिणो निमित्तभूता भावा-व्रीड़ादयो हि काव्येषु व्यभिचारिण उच्यन्ते, पूर्ववदेवालौकिकव्यभिचारणव्यापारवत्त्वादित्यर्थः ॥९॥

मिलितानामेषां रत्याद्युद्बोधं प्रति कारणत्वमाह—अलौकिकेति।

अलौकिकस्य रत्यादेः सामाजिकनिवासिनः ॥
उद्बोधे कारणं ज्ञेयं त्रयमेतत्समुच्चितम् ॥१०॥

सामाजिकनिष्ठस्यात एवालौकिकस्य रत्यादेः स्थायिन-

उद्बोधे विभावानुभावव्यभिचारिणां त्रयं समुदितं कारणं भवतीति ज्ञातव्यम्, अयं भावः—यद्यपि लोके रत्यादिकं प्रति कारणकार्य्यसहकारिताऽऽपन्नानि वस्तूनि; तथाऽपि काव्येषु पानकरसन्यायेनास्वादं प्रति कारणताभाञ्जि संपद्यन्ते, पदार्थस्वभावस्य पर्यनुयोगानर्हत्वादिति तु तत्त्वम् ॥१०॥

उक्तालौकिकत्वबोधकत्वमेव भावानामुपपादयति—ज्ञातेति ।

ज्ञातस्वपरसंबन्धादन्ये साधारणात्मना ॥
अलौकिकं बोधयन्ति भावं भावास्त्रयोऽप्यमी ॥११॥

त्रयोप्यमी भावाः=विभावानुभावव्यभिचार्य्याख्याः, ज्ञातः स्वस्य परस्य च संबन्धो निरूपितत्वाश्रयत्वादिको यस्य तादृशादलौकिकात् कारणादेः, अन्येऽलौकिकव्यापारसाधारणीकरणाख्यशालितयाऽलौकिकाः सन्तोऽलौकिकं=साधारणीभूतं; भावं स्थायिनं बोधयन्ति ॥ ११ ॥

ततः किं फलतीत्याह—भावेति ।

भावत्रितयसंसृष्टस्थायिभावावगाहिनी ॥
समूहालम्बनात्मैका जायते सात्त्विकी मतिः ॥१२॥

भावानां=विभावानुभावसंचारिणां त्रितयेन=समुदायेन संसृष्टो यथायथमुद्बोधितः प्रत्यायितः परिपोषितो यः स्थायिभावस्तद्विषयिका समूहालम्बनं नानाप्रकारतानिरूपितनानाविशेष्यतानिरूपकं यज्ज्ञानं तद्रूपा समुद्रिक्तसत्त्वकचेतःपरिणामात्मिका वृत्तिर्जायते, प्रपानकरसन्यायेनेति भावः ॥१२॥

तया किं क्रियत इत्याह—सेति ।

साऽनन्तरक्षणेऽवश्यं व्यनक्ति सुखमुत्तमम् ॥
तद् रसः, केचिदाचार्य्यास्तामेव तु रसं विदुः ॥१३॥

सा=पूर्वोक्ता मतिः, अनन्तरक्षणे=स्वाव्यवहितोत्तरक्षणे, सुखं लोकोत्तरानन्दमत एवोत्तममवश्यमसंशयं व्यनक्ति व्यञ्जनयाऽवगमयति; तद्=व्यक्तीकृतं सुखं रसः कथ्यते,

केचिदाचार्यास्तु तामेव=समूहालम्बनात्मिकां मतिमेव रसं वदन्ति; एवपदेन तादृशमत्या व्यज्यमानसुखस्य रसत्वं व्यवच्छिद्यते।

अत्र रसविषये बहवो मतभेदाः सन्ति, सर्वेषां चैषां मूलं तत्रभवदाचार्यभरतर्षिसूत्रं यथा—"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि"ति, अत्र संयोगादियं पञ्चमी हेत्वर्था, हेतुत्वं च कारकत्वज्ञापकत्वान्यतररूपं, ज्ञापकत्वं तु तद्विषयकज्ञानजनकज्ञानविषयत्वरूपं, ज्ञानं चेह त्रिविधं–प्रत्यक्षम्, अनुमितिः, शाब्दबोधश्च, प्रत्यक्षं च द्विविधं यथाऽर्थमयथाऽर्थं च, द्वितीयं पुनर्द्विधा-दोषजन्यं भ्रमत्वेन प्रसिद्धम्, इच्छाजन्यमारोपत्वेन ख्यातम्,

एवं च दमयन्त्यादिदर्शनजनितनलादिसमवेतरत्याद्युद्बोधस्य तत्कार्यकटाक्षादिसहचरितोत्कण्ठाऽऽदीनां चानुकार्यनलादिनैव संबन्धात्तत्रैव रसस्योत्पत्तिः; नटे तु तत्तदनुकृतया सादृश्यमूलकारोप इति भट्टलोल्लटादीनां मतम्।

केचन नाट्यादिषु प्रकटविभावादिषु व्यञ्जनया नलादौ दमयन्त्यादिरतौ ज्ञातायां भावनादोषेण कल्पितनलत्वावच्छिन्ने स्वस्मिन् समुत्पन्नोऽनिर्वचनीयो दमयन्त्यादिविषयकरत्यादिरेव रस इति समगिरिषत।

अन्ये तु व्यञ्जनाऽनिर्वचनीयख्यात्यनभ्युपगमाद् भावनादोषेणात्मनि नलाद्यभेदग्राही दमयन्त्यादिरतिमदभेदबोधोविषयासत्त्वेऽपि मानसो भ्रम एव रस इत्यास्थिषत।

श्रीशङ्कुकानुयायिनस्तु नलत्वेन गृहीते नटात्मके पक्षेऽकृ-

त्रिमत्वेन गृहीतैर्विभावादिहेतुभिर्नलादिगतरत्यादिरनुमीयमानो-
रस इत्यभ्युपागमन् ।

भट्टनायकानुवर्त्तिनस्तु—नाट्यादिना व्यक्तिविशेषवृत्तित्व-
निरूपितत्वाभ्यां जनितेऽपि स्थायिज्ञाने भावनया तयोः प्रमोषाद्
रतित्वादिनैव प्रतीतरत्यादेः स्ववृत्तिरत्यादिसाजात्येनानुभूतचरर-
त्यादिसंस्कारोद्बोधे ज्ञानस्य स्वप्रकाशत्वेन सत्त्वोद्रेकेणानन्दरूपो-
रसः शब्दस्य भोगाख्यतृतीयव्यापारेण साक्षात् क्रियत इत्युपागुः ।

इत्थं स्वस्वशेमुषीविकाससाहायकमवलम्ब्य पारमर्षसूत्रघटक-
पञ्चमीनिष्पत्तिपदार्थवैविध्येनाभियुक्ताः स्वस्वमतानुसारेण रस-
तत्त्वं प्रत्यपीपदन्, परन्तु मुनिसंमतरहस्यानाकलनाच्छास्त्र-
सिद्धान्तिनामश्रद्धेयान्येवाखिलान्युक्तमतानि तदनुसारीणि परा-
णि चानिर्दिष्टान्येकदेशिमतानि ।

तत्राश्रद्धाबीजानि चेमानि संक्षेपतः प्रधानानि-प्रथमे तावद्
विप्रकृष्टत्वाल्लौकिकत्वात् काल्पनिकत्वादर्थान्तरता ।

द्वितीयस्मिन् विमतत्वादनिर्वचनीयस्य भ्रमविषयत्वाच्च
तथात्वम् ।

तृतीयेऽपि भ्रमास्पदत्वं तादृशमेव ।

तुरीये भेदग्रहेण बाधात् कथमपि भेदाग्रहेऽपि नलादौ
भैम्यादिरतिग्रहस्य सामाजिकप्रवृत्त्यनौपयिकत्वात् अन्यस्थले
पक्षधर्मताज्ञानविरहाच्चाभिमतरसपरिपन्थिताऽनिवार्य्या ।

पञ्चमे तु प्रमाणागोचरस्य शब्दनिष्ठक्रमिकव्यापारत्रयस्यैवा-
रुन्तुदतेति ।

अभिनवगुप्ताचार्यमम्मटभट्टादयस्तु—साधारणीकृतिव्यापा-
रमहिमभग्नावरणचिद्विशिष्टस्थायी रस इति सिद्धान्तयन्ति स्म ।

एतदेव मतं मूलकारेण केचिदित्यादिना सूचितम्,
अस्वरसबीजं त्वत्र श्रुतिविरोध एव, श्रुतौ हि "रसो वै सः"

"रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती"त्यादिनाऽऽत्मैव रस उक्तः, कथितमते तु तद्विशिष्टस्थायीति तत्प्राधान्याप्राधान्यादिविरोधः स्फुट एव ।

वस्तुतस्तु तादृशस्थायिविशिष्टश्चिदात्मैव रसः सोऽपि न जीवात्मा परन्तु सच्चिदानन्दविग्रहः परमात्मैव, अन्यथोक्तद्वितीयश्रुतिवाक्यार्थानुपपत्तेस्स्वादवस्थ्यं स्यादित्यलं बहुना ॥१३॥

## तेषां प्रत्येकविज्ञानं कारणत्वेन तैर्मतम् ।
## स्थायीभावो रस इति प्रयोगस्तूपचारतः ॥१४॥

केचिदिति मते व्यवस्थामाह—तेषामिति ।

तैः=समूहालम्बनात्मिकां मतिं रसमभ्युपगच्छद्भिः, तेषां=विभावादीनां, प्रत्येकविज्ञानं कारणमुच्यते रसप्रतीतेरिति यावत्, स्थायिभावस्य रसत्वेन व्यवहारस्तूपचारतः कारणे कार्यबोधकशब्देन व्यपदेशो गौण इत्यर्थः ॥१४॥

## एवमव्यवधानेन क्रमो यस्मान्न लक्ष्यते
## असंलक्ष्यक्रमव्यङ्ग्यं ध्वनिं तस्मादिमं विदुः ॥१५॥

रसस्यासंलक्ष्यक्रमव्यङ्ग्यत्वेन व्यवहारमुपपादयति—एवमिति ।

समूहालम्बनमतेरव्यवहितोत्तरक्षणे रसव्यक्ताववश्यं क्रमोऽनुमीयमानोऽस्ति, किन्तूत्पलपत्रशतवेधन्यायेन क्षिप्रभावितया न लक्ष्यते, तदेवोक्तमत्रभवद्भिर्मम्मटभट्टैः—"न खलु विभावानुभावव्यभिचारिण एव रसोऽपि तु रसस्तैरित्यस्ति क्रमः केवलमसौ लाघवान्न लक्ष्यते" इत्यादिना, अत एव चासंभवक्रममनुक्त्वाऽसंलक्ष्यक्रमः कथ्यते, एतदेवाह—एवमव्यवधानेनेत्यादिनेति निष्कृष्टोऽर्थः, ध्वन्यतेऽर्थोऽनेनेति व्यञ्जनव्यापारोऽ-

पि ध्वनिशब्दव्यवहार्य्यः, स चाभिधालक्षणाव्यापारयोरेकत-रस्याव्यवहितोत्तरं प्रसरतीत्यतोऽभिधामूला, लक्षणमूला च पूर्वं द्विधोच्यते व्यञ्जना, इयं किल विवक्षितान्यपरवाच्यध्वनि-रविवक्षितवाच्यध्वनिश्च क्रमेणोच्यते, तत्र मूलभूतलक्षणाया-अन्वयानुपपत्तितात्पर्यानुपपत्तिप्रयुक्ततया द्वैविध्येन; तन्मूलध्व-निरपि क्रमेणात्यन्ततिरस्कृतवाच्योऽर्थान्तरसंक्रमितवाच्यश्चोच्यते, तथा विवक्षितान्यपरवाच्योऽभिधामूलोऽपि ध्वनिर्द्विप्रकारो-व्यङ्ग्यप्रतीतिक्रमस्य लक्ष्यत्वालक्ष्यत्वाभ्यां, प्रथमः संलक्ष्य-क्रमोऽन्योऽसंलक्ष्यक्रमः, सोऽयं प्रकृतकारिकया प्रतिपादित-इति ॥१५॥

प्रसङ्गात्संलक्ष्यक्रमध्वनिमपि दर्शयति—व्यवेति ।

**व्यवधानात्क्रमो लक्ष्यो वस्त्वलंकारयोर्ध्वनौ ।**
**लक्ष्यव्यङ्ग्यक्रमं तस्माद् ध्वनिमेतं प्रचक्षते ॥१६॥**

अयंभावः—वाच्यबोधोत्तरं व्यञ्जिजिषितप्रतीत्यौपयिक-सामग्रीसंधानेन व्यवधीयमाना भवति व्यङ्ग्यव्यक्तिरत आह—व्यवधानादिति, इदमिहावधेयं—पूर्वोक्ता व्यञ्जना प्रकारान्तरेण पुनर्द्विविधा—शाब्दी तथाऽऽर्थी, तत्र—

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ॥
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्"
इत्युक्तप्रकारा शाब्दी, तथा—
"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ॥
प्रस्तावदेशकालादेवशिष्ट्यात् प्रतिभाजुषाम् ॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा"

इत्युक्तरीत्या चार्थी, संयोगादयश्च—महाभाष्याद्वितीयमार्मिक-महावैयाकरणमहाकविमहायोगिमहाराजभर्तृहरिणा निर्दिष्टाः—

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ॥
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" इति,
एवं च शाब्दध्वनिः संलक्ष्यक्रमो विधात्रयवान्—तदुक्तम्—
"अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः" ॥

तत्र शब्दशक्त्युत्थः—

"अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा" ॥

इति रीत्याऽलंकारात्मना वस्त्वात्मना च द्विधा, तदेतदुक्तं—"वस्त्वलंकारयोर्ध्वनावि" ति—

तत्रालंकारात्मा ध्वनिर्यथा—

सोऽयं वसन्तसमयः समियाय यस्मिन्
पूर्णं तमीश्वरमुपोढनवानुरागम् ।
गूढग्रहा रुचिरया सह राधयाऽसौ
रङ्गाय संगमयिता निशि पौर्णमासी ॥

अत्र प्रकृतश्रीकृष्णवर्णनेऽप्रकृतचन्द्रवर्णनमसंबद्धं मा भूदिति चन्द्रकृष्णयोरुपमानोपमेयभावे पर्यवसानादलंकारध्वनिः ।

वस्तुरूपोऽयं यथा—

अध्वानं व्रजधूर्त्त ! मा वृणु पुरः पश्याम्बरान्ते दृशं—
निक्षिप्योरुपयोधरोन्नतिमिमां नष्टेन्दुलेखाश्रियम् ।
नव्या कञ्चुलिकोज्ज्वला तनुरियं रागेण वल्गुश्रिया
यावन्न स्तिमिता सती कुटिल ? मे वैवर्ण्यमापद्यते ॥

अत्राध्वानं-व्रज-मा-अम्बरपयोधरेन्दुलेखारागादिपदैः स्वाभिप्रायाविष्कृतिरूपं वस्तु व्यज्यते ।

एवं दिङ्मात्रमुदाहृतं विस्तरभियाऽर्थशक्त्युभयशक्त्युत्थभेदतत्प्रभेदा न दर्शिताः ॥१६॥

असंलक्ष्यक्रमध्वनिविषयं विशदयति—रसेति ।

**रसभावतदाभासभावशान्त्यादिरक्रमः ।।**
**अनन्तरक्षणे यस्माद् व्यज्यतेऽवश्यमेव सः ॥१७॥**

असंलक्ष्यक्रमव्यङ्ग्यो न केवलं योगरूढ्यनुगृहीतो रसः किन्तु योगाश्रयाद्रस्यत इति रसव्युत्पत्त्या रसो भावो रसाभासो भावाभासो भावशान्तिर्भावोदयो भावसंधिर्भावशबलत्वं चेत्यष्टावपि रसपदार्थाः । अन्यत्पूर्वमुक्तम् । एषामुदाहरणानि—

तत्र रसो यथा—

धृते पाणिद्वन्द्वे झटिति झणितं रत्नवलयै-
र्हृते नीवीग्रन्थौ मुखरितममन्दं रशनया ।
प्रियायाः स्वानन्दप्रतिहतधियः किन्त्वपघनो-
घनोत्तृष्णं कृष्णं प्रति समतनोत्तर्जनमिव ॥

भावश्च—

"रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः"

इत्युक्तरूपः—

स यथा—

दिवि वा भुवि वा ममास्तु वासो-
नरके वा नरकान्तक ! प्रकामम् ।
अवधीरितशारदारबिन्दौ-
चरणौ ते मरणेऽपि चिन्तयामि ॥

अत्र भगवद्विषयकत्वाद्रतेर्भावत्वम्।

"तदाभासा अनौचित्यप्रवर्त्तिताः"

तदुक्तम्—

"अनौचित्यादृते नान्यद्द रसभङ्गस्य कारणम्" इति, ततश्चानौचित्यप्रवृत्तो रसो भावश्च रसाभासभावाभासौ क्रमाद्द भवतः, तत्र रसाभासो यथा—

गन्धर्वि! कुर्वाणमवेच्य लीलामग्रे धरण्यां सखि! कामपालम्।
आकर्णयन्ती च मुकुन्दवेणुं भिन्नाऽद्य साध्वि! स्मरतो द्विधाऽसि॥

अत्र बले,कृष्णे चैकस्या गन्धर्व्याः कस्याश्चिद्रतिरनुचिता,—
तदुक्तम्—

"एकत्र चेदनासक्तिस्तिर्यङ्म्लेच्छगता रतिः।
योषितोऽनेकरक्तिश्च रसाभासस्त्रिधोदितः"॥

भावाभासो यथा—

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी।
तत् किं करोमि विदधे कथमत्र मैत्रीं—
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥

अत्र श्रीजानकीप्रणयविषयिका दशाननचिन्ताऽनुचितेति तदाभासता।

भावशमो यथा—

म्लानाऽसि किं प्रेयसि!, मामकीनं—
हृत् पृच्छ, पृच्छामि तदित्युरोऽस्याः।
स्पृशन्निदं स्वस्थमिदं स्म कृष्णो—
ब्रवीति, सा नम्रमुखी बभूव॥

अत्र विषादस्य शान्तिः।

भावोदयो यथा—

आलीजनैर्मण्डनकेलिकाले
विभूष्यमाणा वृषभानुपुत्री ।
उरोगते नीलमणीन्दुहारे
खिन्ना सकम्पा पुलकाकुलाऽऽसीत् ॥

अत्र हर्षस्योदयः ।

भावसन्धिर्यथा—

सुचिरमनुचरीभिः पाठितां कृष्णगाथां—
सदसि शुकवधूभिः शृण्वती गीयमानाम् ।
प्रणयसदयमेकं तासु विन्यस्यतीयं—
चकितचकितमन्यन्नेत्रमास्ये गुरूणाम् ॥

अत्रौत्सुक्यत्रासयोः संधिः ।

भावशावल्यं यथा—

पतिरतिकुपितो मनः प्रमत्तं खलनिकरः किल दूषणाभिधायी ।
मुररिपुरपि वेषपेशलोऽसौ भण विमले ! कमुपायमाश्रयामि ॥

अत्र भयचपलताशङ्कौत्सुक्यानां शबलता । इति ॥१७॥

रसप्रसङ्गात् तत्कारणेषु प्रदर्शनीयेषु बाधकैकसत्त्वे साधकसहस्रस्याप्यकिञ्चित्करत्वमिति न्यायेन तत्सामग्रीघटकं प्रतिबन्धकाभावं निर्देष्टुमभावज्ञानकारणीभूतप्रतियोगिज्ञानविषयमाह—श्रुतीति ।

**श्रुतिदुष्टादयो दोषा ये रसप्रतिबन्धकाः ॥**
**तदभावोऽपि सामग्र्यां निविष्टोऽनिष्टहानिकृत् ॥ १८॥**

रसस्य प्रतिबन्धका विरोधिनो ये दोषाः श्रुतिदुष्टादयः; तेषामभावोऽपि रसव्यक्तिसंपादकसामग्रीघटकीकर्त्तव्यो, येनानिष्टो रसप्रत्ययप्रतिरोधो न भवेदित्यर्थः ॥१८॥

बाधकाभावमुक्त्वा संप्रति साधकविशेषानाह—या इति।

**या रीतियो ये च गुणास्तज्ज्ञानमपि कारणम् ॥**
**अलंकाराश्च विज्ञाता भवन्ति परिपोषकाः ॥१६॥**

अत्र रीतित्वं शब्दसंघटनाऽऽत्मकव्यापारविशेषत्वं, गुणत्वं च रसोत्कर्षकत्वे सति रसाव्यभिचरितस्थितिकत्वम्, अलंकारत्वं तु रसादिभिन्नव्यङ्ग्यभिन्नत्वविशिष्टशब्दार्थान्यतरनिष्ठविषयितासंबन्धावच्छिन्नचमत्कृतिजनकताऽवच्छेदकताऽवच्छेदकत्वम्, एते च साक्षात्परम्परासाधारण्येन रसोपकारका इति वर्त्तुलार्थः ॥१६॥

अस्य प्रत्यायकः को वेति तृतीयप्रश्नमुत्तरयति—गुणेति।

**गुणालंकाररीतीनां भावानां च निवेदकः ॥**
**तस्य प्रत्यायकः शब्दो वृत्त्या व्यञ्जनरूपया ॥२०॥**

गुणादीनां तथा विभावादीनां बोधकः शब्दो रसस्य व्यञ्जनया वृत्त्या प्रत्यायको व्यञ्जक इत्यर्थः। वृत्तिश्चार्थबोधानुकूलः शब्दनिष्ठः सम्बन्धविशेषः; स चाभिधैवेति वैयाकरणाः, लक्षणाऽपि द्वितीयेति नैयायिकादयः, व्यञ्जनाऽपि तृतीयेत्यालङ्कारिकाः। एतस्या वृत्तित्वं त्वावश्यकमिति काव्यप्रकाशादौ महता संनाहेन प्रत्यपादीति जिज्ञासुभिस्तत एवावसेयमिह नैव वितायते विस्तरभियेति ॥ २० ॥

रसव्यक्तेः शाब्दत्वेऽपि प्रत्यक्षत्वमुपपादयति—वृत्तिरिति।

**वृत्तिः कार्याऽपरोक्षाऽस्य शब्दस्य सुखगर्भिणी ॥**
**दशमस्त्वमसीत्यादिवाक्योत्थमतिवृत्तिवत् ॥२१॥**

अस्य=रसप्रत्यायकस्य शब्दस्य सुखविषयिकाऽपरोक्षा वृत्तिः कार्या=स्वीकार्याऽनुभवानुरोधाद्, अथ वा शब्दस्य प्रमाणस्य तादृगपरोक्षा वृत्तिः कार्यरूपा फलात्मिका प्रमितिरिति

यावत्, तत्र निदर्शनं दशमेति—यथा "केचन दश जना ग्रामतो-गङ्गास्नानाद्यर्थं गताः स्नात्वेह वृक्षमूले समुदित्य सर्वे वयं गमिष्याम इति कृतसमयाः स्नातागतास्तत्रात्मानं विहाय स्वान् गणयन्तो नवत्वं प्रतीत्य सहचरवियोगभ्रमाद्ध विक्रोशन्तः केनापि चतुरेणागत्य विक्रोशहेतुं पृष्टेभ्यस्तमाकर्ण्य पुनर्गणनायादिष्टेषु तेष्वन्यतमः पूर्ववत् स्वेतरान् यदा नवाजीगणत्तदैवैनेन दशमस्त्वमसीत्युक्ते तदीयवाक्यादात्मानं दशमत्वेन साक्षात्कुर्वति तस्मिन् सहर्षास्ते यथाऽऽगतं जग्मुः", तथाऽत्रापि शब्दतोऽपरोक्षज्ञानं निर्बाधमिति भावः ॥ २१ ॥

अधुना "प्रतीतिरपि कीदृशी"ति तुरीयं प्रश्नं समाधातुमाह—नित्यमिति ।

नित्यं सुखमभिव्यक्तं "रसो वै स" इति श्रुतेः ॥
प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥२२॥

अयमभिसंधिः—सुखं द्विविधं प्रथममापामरगोचरताऽऽस्पदं सत्त्वगुणपरिणामरूपं दुःखानुविद्धमतएव हेयकुक्षिनिक्षिप्तमपि सहजाभिनिवेशवशंवदैराग्रहेण सादरमुपादीयमानं जडत्वमुदयाप्ययशालि, चरमं तु नित्यचिदानन्दात्मस्वरूपं वस्तुतः सुखपदवाच्यं विवेकिधुरीणैरुपेयं नित्यं परन्त्वविद्याऽऽवृततया तथात्वेनानिशमननुभूयमानमावरणभङ्गेऽभिव्यज्यमानं रसत्वेन साक्षात् क्रियते, प्रकृते चावरणभङ्गो न प्रपञ्चकारणाविद्यानिवृत्तिनिबन्धनस्तादृशस्य श्रवणमनननिदिध्यासनायत्तत्वात्, किन्तु विभावादिज्ञानप्रयुक्तसाधारणीकरणनिबन्धनस्तात्कालिकस्तन्निवृत्तौ तस्यापि निवृत्तिरेतावान् विशेषः, तादृशसुखस्य रसत्वे मानं भगवती श्रुतिरेव, तदाह—"रसो वै सः" आत्मत्वादेवास्य स्वप्रकाशस्य=प्रकाशान्तरानधीनप्रकाशस्य प्रतीतिः साक्षात्कृति-

निर्विकल्पसुखात्मिका, सुखात्मिकेति स्वरूपकथनं, निर्विकल्पलोक्त्या विगलितवेद्यान्तरता तदानीन्तनी ध्वनिता ॥२२॥

एवं रससंबद्धं प्रश्नचतुष्टयं समाधायान्यैरुक्तं रसे वैलक्षण्यं संप्रतिपत्त्याऽऽह—कार्येति ।

## कार्यज्ञाप्यादिवैधर्म्यं यत्तु कैश्चिन्निरूपितम् ॥
## तदप्येतेन मार्गेण योज्यं शास्त्राविरोधतः ॥२३॥

यत्तु--रसे मृत्कुलालादीनां कार्यतो घटादेस्तथा दीपादीनां ज्ञाप्यतस्तस्मादेव वैधर्म्यं वैलक्षण्यं कैरपि प्रदर्शितम्, अयं भावः—रसस्य कार्यत्वेऽन्वयव्यतिरेकाभ्यां विभावादिज्ञानकारणकत्वमेव वक्तव्यं, तच्चासंभवि; द्रव्येतरस्य समवायिकारणत्वस्यादृष्टत्वाद्, ज्ञानस्यात्मविशेषगुणतयाऽसमवायिकारणत्वस्यापि दुर्वचत्वात्, परिशेषाद्द निमित्तत्वं वाच्यम्, एतदप्ययौक्तिकं; तथात्वे विभावादिज्ञाननाशप्रयोज्यनाशप्रतियोगित्वं रसप्रतीतेरानुभविकं नोपपद्यते, न हि निमित्तकारणनाशात् कार्यनाशो लोके दृष्टचर इति कार्यतो वैधर्म्यं, ज्ञाप्यतोऽपि ज्ञापकसमसत्ताकत्वं तत्स्फुटमेव, लोके हि ज्ञाप्यो घटादिर्ज्ञापकात् प्रदीपादेर्विषमसत्ताक एव प्रसिद्धः, एवमुक्तं तद्द वैधर्म्यम्; एतेन मार्गेण श्रुतिप्रमितेन रसस्यात्मानन्यत्वनयेन योज्यं संगमनीयम् ।

नन्वेवं रसस्य कार्यज्ञाप्यविचित्रत्वे प्रदर्शितचरभरताचार्यसूत्रघटकपञ्चम्यर्थासंगतिर्वज्रलेपायिताऽत आह—"शास्त्राविरोधत" इति, इदमत्राकूतं—भग्नावरणचितो हि रसत्वे विशेष्यांशमादाय कार्यज्ञाप्यवैधर्म्यं सुवचं, विशेषणांशमादाय तु पञ्चम्यर्थसमन्वय इति न कोऽपि विरोधः ॥ २३ ॥

निष्कृष्टसिद्धान्तमाह—परमेति ।

परमानन्द आत्मैव रस इत्याहुरागमाः ॥
शब्दतस्तदभिव्यक्तिप्रकारोऽयं प्रदर्शितः ॥ २४ ॥

यद्यप्यापाततो भग्नावरणचित्त्वेन जीवात्मा रसः प्रतीयते निर्दिष्टसूत्रेण; तथाऽपि रसप्रतिपादका आगमाः-"रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" "एष ह्येवानन्दयाति" "एतस्यैवानन्दस्यान्ये मात्रामुपजीवन्ती"त्यादयः; परमः=साम्यातिशयशून्य आनन्द आत्माऽर्थात् परमात्मैव रस इत्याहुः, उपक्रमोपसंहारादितात्पर्यनिर्णायकसमष्टिसध्रीचीना इति शेषः, परथा हि प्रामाण्यं तेषां दुरापं स्यादिति हृदयम्, उक्तसूत्रं तु गुडजिह्विकान्यायेन लौकिकरसास्वादप्रत्यायनाय विनेयोन्मुखीकरणार्थं प्रवृत्तमपि न परमात्मनो रसकेन्द्रतां वारयितुं प्रभवति, "यत्परः शब्दः स शब्दार्थ" इति न्यायादुभयत्र तात्पर्यसत्वे वाक्यभेदप्रसङ्गाच्च, ततश्चान्यतोऽवगमितं भगवतो रसत्वं शब्दतः खल्वभिव्यङ्क्तुमयं प्रकारो भक्तिरसास्वादनौपयिकः प्रदर्शितः ॥ २४ ॥

उक्तप्रकारेण सुखाभिव्यक्तिः शब्दतो न केवलमस्माभिरेवोच्यते; किन्तु मीमांसकैरपि भङ्ग्यैषाऽभ्युपगतेति दर्शयति—अर्थेति।

अर्थवादाधिकरणे नवशैलादिवर्णनम् ॥
श्रोतॄणां सुखमात्रार्थमिति भट्टैरुदाहृतम् ॥२५॥

पूर्वमीमांसायाः प्रथमाध्यायगतद्वितीयपादस्थार्थवादाधिकरणे "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इतिजैमिनीयसिद्धान्तसूत्रीयशावरभाष्यव्याख्याने तन्त्रवार्तिके तत्रभवत्कुमारिलभट्टपादैः "के चित् स्वयमेव श्रूयमाणगन्धमादनवर्णकप्रभृतयः प्रीतिं जनयन्ति" इत्यादिना संदर्भेण यदुक्तं; तत् श्रोतॄणां सुखमात्रार्थमेवातः स्पष्टैव शब्दात्सुखव्यक्तिः ॥२५॥

उक्तार्थे गुरुप्रभाकराणामपि न वैमत्यमित्याह—कार्येति।

कार्यान्वितत्ववादेऽपि न विशेषोऽस्ति कश्चन ॥
यस्मात् कृतीप्सितत्वेन कार्यं सुखमपीष्यते ॥२६॥

कार्यान्वितपदार्थानामेव शाब्दबोधो नान्येषामिति वदतां गुरूणामपि मते कृत्याऽऽप्तुमेषणीयस्यैव कार्यपदार्थतयोक्तकार्यत्वस्य सुखेऽप्युपपत्तेरिति भावः ॥२६॥

एकदेशिमतं निराकरोति—अलौकिकेति।

अलौकिकनियोगे तु न किंचिन्मानमीक्ष्यते ॥
लोके वाचां च सर्वेषां तत्परत्वं न युज्यते ॥२७॥

लोकानवगतप्रवर्त्तनापरवाक्यस्यैव प्रामाण्यमिति मते न किमपि साधकं; प्रत्युत बाधकमस्ति, अयं भावः—प्रवृत्तिनिवृत्तिप्रयोजकत्वं वाक्यविशेषस्य वेदे यथा; लोकेऽपि तथा, न च लोके सर्वेषां व्यवहर्त्तॄणां प्रवर्त्तकादिवाक्यानां तादृशनियोगे तात्पर्यं वक्तुं सुशकम्, अनुभवविरोधादित्याशयः ॥२७॥

लोकविरोधं प्रदर्श्य; तादृशनियोगपरत्व एव शब्दस्य प्रामाण्यमित्यपि निरस्यति—प्रयोजनेति।

प्रयोजनवदज्ञातज्ञापकत्वं च मानता ॥
शब्दस्य कार्यपरता त्वाचार्यैरेव खण्डिता ॥२८॥

चो हेतौ, यतो मानता=प्रवर्त्तकज्ञानस्य प्रमाणता; प्रयोजनवत्त्वे सति यदज्ञातं मानान्तरानधिगतं तद्विषयकज्ञानजनकत्वं वेदलोकसाधारणं निर्विवादमास्थेयं, कार्य्यपरता तु शब्दस्य प्रमाणभूतस्येति शेषः, आचार्य्यैः=अद्वैतवादप्रतिष्ठापकतत्रभवत्श्रीशंकराचार्य्यैः खण्डिता, ब्रह्मसूत्रभाष्ये समन्वयाधिकरणादाविति वाक्यशेषः ॥२८॥

इदानीमुक्ताचार्य्यैर्यादृशी प्रवृत्त्यङ्गताऽऽपन्ना प्रमा व्यवहारेऽनुमोदिता तादृशीं दर्शयति—देवतेति ।

**देवताऽधिकृतिन्यायात् पदैरन्यपरैरपि ॥**
**प्रयोजनवदज्ञाताबाधितार्थमतिर्भवेद् ॥२९॥**

उत्तरमीमांसायाः प्रथमाध्याये तृतीयपादे देवताऽधिकरणे "भावं तु बादरायणोऽस्ति हि", इति सिद्धान्तसूत्रेऽद्वैतभाष्यकाराचार्याः—"विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते", इत्यादिप्रबन्धेनान्यपरैः=विधेयस्तुतितात्पर्यकैरपि पदैः=अर्थवादघटकैः, फलवती मानान्तरानवाप्ता मानान्तराबाधिता च प्रमा, प्रवृत्त्यङ्गमिति शेषः, भवेद्, इति सिद्धान्तयन्ति स्म, तथा चान्यपरैरपि पदैर्बोधो दुर्निवार इति फलितम् ॥२९॥

एवं च प्रकृतेऽपि नानुपपत्तिरित्याह—तस्मेति ।

**तस्मादन्यपरत्वे वा स्वातन्त्र्ये वा पदानि नः ॥**
**व्यञ्जयन्ति परानन्दं सहकार्यानुरूप्यतः ॥३०॥**

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमधुसूदनसरस्वतीविरचिते
श्रीभगवद्भक्तिरसायने भक्तिरसप्रतिपादको-
नाम तृतीयोल्लासः ॥

**ग्रन्थश्च संपूर्णः ।**

---

तस्माद्=अर्थवादस्थलाद्युक्तप्रकाराद्, नः=अस्माकं भक्तिरसास्वादमभिलाषुकाणां पदानि स्वघटितवाक्यप्रतिपाद्येतरतात्प-

र्थकाणि स्वप्रयोज्यतात्पर्यपराणि वा सहकारिणां=विभावानुभावव्यभिचारिव्यापाराणाम् आनुकूल्यात् परानन्दं साम्यातिशयविनिर्मुक्तं भक्तिरसं व्यञ्जनया प्रतिपादयन्तीति निर्विवादमित्यखिलमवदातम् ॥३०॥

इति श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाचार्यतर्करत्नन्यायरत्नगोस्वामिश्रीदामोदरशास्त्रिविरचितायां भगवद्भक्तिरसायनव्याख्यायां प्रेमप्रपायां भक्तिरसप्रतिपादको नाम तृतीयोल्लासः । निबन्धश्च समाप्तः ॥



# भक्तिरसायनम् ।



भक्तिसामान्यनिरूपणनामकः

## प्रथम उल्लासः ।

नवरसमिलितं वा केवलं वा पुमर्थं-
परममिह मुकुन्दे भक्तियोगं वदन्ति ।।
निरुपमसुखसंविद्रूपमस्पृष्टदुःखं-
तमहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि ।।१।।
संसाररागेण बलीयसा चिरं निपीडितैस्तत्प्रशमेऽतिशिक्षितम् ।।
इदं भवद्भिर्बहुधा व्ययातिगं निपीयतां भक्तिरसायनं बुधाः! ।।२।।
द्रुतस्य भगवद्धर्म्माद्धारावाहिकतां गता ।।
सर्वेशे मनसो वृत्तिभक्तिरित्यभिधीयते ।।३।।
चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम् ।।
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ।।४।।
कामक्रोधभयस्नेहहर्षशोकदयाऽऽदयः ।।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनन्तु तत् ।।५।।
द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना ।।
संस्कारवासनाभावभावनाशब्दभागसौ ।।६।।
शिथिलीभावमात्रन्तु मनो गच्छत्यतापकैः ।।
न तत्र वस्तु विशति वासनात्वेन किञ्चन ।।७।।
द्रवतायां प्रविष्टं सद् यत् काठिन्यदशां गतम् ।।
चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति ।।८।।

स्थायिभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते ॥
व्यक्तश्च रसतामेति परानन्दतया पुनः ॥९॥
भगवान् परमानन्दस्वरूपः स्वयमेव हि ॥
मनोगतस्तदाकाररसतामेति पुष्कलम् ॥१०॥
कान्ताऽऽदिविषयेऽप्यस्ति कारणं सुखचिद्घनम् ॥
कार्य्याकारतया भेदेऽप्यावृतं मायया स्वतः ॥११॥
सदज्ञातश्च तद्व ब्रह्म मेयं कान्ताऽऽदिमानतः ॥
मायाधृतितिरोधाने वृत्त्या सत्त्वस्थया क्षणम् ॥१२॥
अतस्तदाविर्भावित्वं मनसि प्रतिपद्यते ॥
किञ्चिन्न्यूनाश्च रसतां याति जाड्यविमिश्रणात् ॥१३॥
इति वेदान्तसिद्धान्तस्थापिना रसतोदिता ॥
साङ्ख्यसिद्धान्तमाश्रित्याप्यधुना प्रतिपद्यते ॥१४॥
तमोरजःसत्त्वगुणा मोहदुःखसुखात्मका ॥
तन्मयी प्रकृतिर्हेतुः, सर्व्वं कार्य्यश्च तन्मयम् ॥१५॥
त्रिगुणात्मकमेकैकं वस्तु त्र्याकारमीर्यते ॥
निजमानससङ्कल्पभेदेन पुरुषैस्त्रिभिः ॥१६॥
कामिन्याः सुखता भर्त्रा सपत्न्या दुःखरूपता ॥
तदलाभात्तथाऽन्येन मोहत्वमनुभूयते ॥१७॥
एवं सति सुखाकारः प्रविष्टो मानसे यदा ॥
तदा स स्थायिभावत्वं प्रतिपद्य रसो भवेत् ॥१८॥
परमाण्वेकरूपन्तु चित्तं न विषयाकृति ॥
इत्यादिमतमन्येषामप्रामाण्यादुपेक्षितम् ॥१९॥
गृह्णाति विषयाकारं मनो विषययोगतः ॥
इति वेदान्तिभिः साङ्ख्यैरपि सम्यङ् निरूपितम् ॥२०॥
मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ॥
रूपादि व्याप्नुवच्चित्तं तन्निभं जायते ध्रुवम् ॥२१॥

व्यञ्जको वा यथाऽऽलोको व्यङ्ग्यस्याकारतामियात् ॥
सर्व्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥२२॥
भगवत्पूज्यपादानामियमुक्तिः सयुक्तिका ॥
तथा वार्त्तिककारैरप्ययमर्थो निरूपितः ॥२३॥
अतो मांसमयी योषित् का चिदन्या मनोमयी ॥
मांसमय्या अभेदेऽपि भिद्यतेऽत्र मनोमयी ॥२४॥
भार्य्या स्नुषा ननान्दा च याता मातेत्यनेकधा ॥
जामाता श्वशुरः पुत्रः पितेत्यादि पुमानपि ॥२५॥
बाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनामयः ॥
अतः स्थायीति विद्वद्भिरयमेव निरूपितः ॥२६॥
एवं स्वभावतो भावस्वरूपमुपवर्णितम् ॥
विशेषेण तु सर्व्वेषां लक्षणं वक्ष्यते पृथक् ॥२७॥
भगवन्तं विभुं नित्यं पूर्णं बोधसुखात्मकम् ॥
यद्‍ गृह्णाति द्रुतं चित्तं किमन्यदवशिष्यते ॥२८॥
कठिना शिथिला वा धीर्न गृह्णाति न वास्यते ॥
उपेक्षाज्ञानमित्याहुस्तद्‍ बुधाः प्रस्तरादिषु ॥२९॥
काठिन्यं विषये कुर्य्यात् द्रवत्वं भगवत्पदे ॥
उपायैः शास्त्रनिर्दिष्टैरनुक्षणमतो बुधः ॥३०॥
उपायाः प्रथमस्कन्धे नारदेनोपवर्णिताः ॥
सङ्क्षेपात्तानहं वक्ष्ये भूमिभेदविभागतः ॥३१॥
प्रथमं महतां सेवा तद्दयापात्रता ततः ॥
श्रद्धाऽथ तेषां धर्मेषु ततो हरिगुणश्रुतिः ॥३२॥
ततो रत्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः ॥
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः ॥३३॥
भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्‍गुणशालिता ॥
प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमिका ॥३४॥

लक्षणं भगवद्भक्तेः साधनं सोपपत्तिकम् ॥
सभूमिकं स्वरूपञ्च यथाबुद्धीह वर्णितम् ॥३५॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमधुसूदनसरस्वतीविरचिते भगवद्भक्तिरसायने स्वरूपभूमिकासाधनसहितभक्तिसामान्यनिरूपणं नाम प्रथम उल्लासः समाप्तः ॥



भक्तिविशेषप्रतिपादको—

## द्वितीय उल्लासः ।

द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा ॥
सा भक्तिरित्यभिहिता विशेषस्त्वधुनोच्यते ॥१॥
चित्तद्रुतेः कारणानां भेदाद्ध भक्तिस्तु भिद्यते ॥
तान्युक्तानि तु संक्षेपाद्ध व्याख्यायन्तेऽधुना स्फुटम् ॥२॥
कामः शरीरसंबन्धविशेषः स्पृहयालुता ॥
संनिधानासंनिधानभेदेन स भवेद् द्विधा ॥३॥
तज्जन्यायां द्रुतौ चित्ते या स्याच्छ्रीकृष्णनिष्ठता ॥
संभोगविप्रयोगाख्या रतिः सा सा क्रमाद्ध भवेत् ॥४॥
क्रोध ईर्ष्यानिमित्तं तु चित्ताभिज्वलनं भवेद्ध ॥
तज्जन्यायां द्रुतौ सा तु द्वेषशब्देन गृह्यते ॥५॥
अत्र चेतोव्याकुलत्वं सोपद्रावकदर्शनात् ॥
उपद्रावकनाशार्थं तत्प्रीत्यर्थं च तद्ध द्विधा ॥६॥
तत्राद्यं द्वेष एव स्याद्ध द्वितीयं रतिशब्दभाक् ॥
उपरिष्टात्तदुभयं मया स्पष्टीकरिष्यते ॥७॥
द्वेषाहेतुः स्वमन्तूत्थं वैक्लव्यं चित्तगं तु यत् ॥
तज्जन्यायां द्रुतौ याऽऽस्ते रतिः सा भयमुच्यते ॥८॥

स्नेहः पुत्रादिविषयः पाल्यपालकलक्षणः ॥
सेव्यसेवकभावोऽन्यः सोऽप्युक्तस्त्रिविधो बुधैः ॥९॥
भगवद्दास्यसख्याभ्यां मिश्रितं चापरं जगुः ॥
या कृष्णाकारता चित्ते तज्जन्यद्रुतिशालिनि ॥१०॥
पाल्यपालकभावेन सा वत्सलरतिर्भवेत् ॥
सेव्यसेवकभावेन प्रेयोरतिरितीर्य्यते ॥११॥
हर्षश्चित्तसमुल्लासः कथ्यते स चतुर्विधः ॥
एकः परानन्दमयः श्रीशमाहात्म्यकारणम् ॥१२॥
तज्जन्यायां द्रुतौ शुद्धा रतिर्गोविन्दगोचरा ॥
एतदन्तं हि शास्त्रेषु साधनाज्ञानमिष्यते ॥१३॥
व्रीडाविकृतवाग्वेषचेष्टाऽऽदिजनितोऽपरः ॥
तज्जन्यायां द्रुतौ चेतोविकासो हास उच्यते ॥१४॥
लोकोत्तरचमत्कारिवस्तुदर्शनजः परः ॥
तज्जन्यायां द्रुतौ चेतोविकासो विस्मयो मतः ॥१५॥
युद्धादितापजनितो वीराणां जायते परः ॥
जितचित्तस्य विस्तारो द्रुतस्योत्साह उच्यते ॥१६॥
इष्टविच्छेदजनितो यश्चित्ते क्लिष्टतोदयः ॥
तज्जन्यायां द्रुतौ विष्टा रतता शोक उच्यते ॥१७॥
दया घृणा स्याद्विषयतुच्छत्वज्ञानदीर्घिका ॥
तया द्रुते तु मनसि जुगुप्सा जायते त्रिधा ॥१८॥
पूतिव्रणादिविषये कथितोद्वेगिनी बुधैः ॥
श्मशानोत्थपिशाचादिविषया क्षोभिणी भवेत् ॥१९॥
देहेन्द्रियादिदुःखे त्वविचारणपुरःसरा ॥
घृणा शुद्धेति कविभिः सा जुगुप्सा प्रकीर्त्तिता ॥२० ॥
या तु शोच्यस्य रक्षाऽर्थं प्रवृत्तिरनुकम्पया ॥
तया द्रुते तु मनसि दयोत्साहः स्मृतो बुधैः ॥२१॥
सर्वस्वमपि दास्यामि प्रार्थयेति च यो महान् ॥
उद्यमो द्रुतचित्तस्य दानोत्साहः स उच्यते ॥२२॥

तथा स्वधर्मरक्षाऽर्थं या प्रवृत्तिः प्रयत्नतः ॥
तया चित्तस्य विस्तारो धर्मोत्साहो द्रुतौ भवेद् ॥२३॥
वशीकाराख्यवैराग्यं यत् कामास्पृहताऽऽत्मकम् ॥
तेन द्रुतस्य चित्तस्य प्रकाशः शम उच्यते ॥२४॥
इतोऽन्यथा तु चित्तस्य न द्रुतिर्विद्यते क्व चित् ॥
तदभावात्तु भावो न निरुक्तान्योऽस्ति कश्चन ॥२५॥
यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि ॥
स्थायिनो, रसतां यान्ति विभावादिसमाश्रयात् ॥२६॥
धर्मोत्साहो दयोत्साहो जुगुप्सा त्रिविधा शमः ॥
षडप्येतेन विषया भगवद्विषया न हि ॥२७॥
धर्मवीरो दयावीरो बीभत्सः शान्त इत्यमी ॥
अतो न भक्तिरसतां यान्ति भिन्नास्पदत्वतः ॥२८॥
ईर्ष्याजभयजद्वेषौ भगवद्विषयावपि ॥
न भक्तिरसतां यातः साक्षाद् द्रुतिविरोधतः ॥२९॥
शुद्धो रौद्ररसस्तत्र तथा रौद्रभयानकः ॥
नास्वाद्यः सुधिया प्रीतिविरोधेन मनागपि ॥३०॥
कामजे द्वे रती शोकः प्रीतिभीविस्मयास्तथा ॥
उत्साहो यदि दाने च भगवद्विषया अमी ॥३१॥
व्यामिश्रभावरूपत्वं यान्त्येते क्षीरनीरवत् ॥
विभावादिसमायोगे तथा भक्तिरसा अपि ॥३२॥
शृङ्गारः करुणो हास्यस्तथा प्रीतिर्भयानकः ॥
अद्भुतो युद्धवीरश्च दानवीरश्च मिश्रिताः ॥३३॥
शुद्धा च वत्सलरतिः प्रेयोरतिरिति त्रयी ॥
भावान्तरामिश्रितत्वादमिश्रा रतिरुच्यते ॥३४ ॥
विशुद्धो वत्सलः प्रेयानिति भक्तिरसास्त्रयः ॥
रसान्तरामिश्रितास्ते भवन्ति परिपुष्कलाः ॥३५॥

श्रृङ्गारो मिश्रितत्वेऽपि सर्वेभ्यो बलवत्तरः ॥
तीव्रतीव्रतरत्वं तु रतेस्तत्रैव वीक्ष्यते ॥३६॥
के चित् केवलसंकीर्णाः के चित् संकीर्णमिश्रिताः ॥
के चित् केवलमिश्राश्च शुद्धाश्च स्युश्चतुर्विधाः ॥३७॥
तत्र केवलसंकीर्णा रौद्रो रौद्रभयानकः ॥
धर्मवीरो दानवीरो बीभत्सः शान्त इत्यपि ॥३८॥
मिश्रा एवान्यविषयाः प्रोक्ताः संकीर्णमिश्रिताः ॥
भगवद्विषयास्ते तु ख्याताः केवलमिश्रिताः ॥३९॥
शुद्धास्त्रयः पुरैवोक्ताः संकीर्यन्ते न केन चित् ॥
एवं निरूपिता भक्तिः संक्षेपादुच्यते पुनः ॥४०॥
राजसी तामसी शुद्धसात्त्विकी मिश्रिता च सा ॥
ईर्ष्याजद्वेषजाऽद्या स्याद्व भयजद्वेषजा परा ॥४१॥
हर्षजा शुद्धसत्त्वोत्था कामशोकादिजेतरा ॥
सत्त्वजत्वे तु सर्वासां गुणान्तरकृता भिदा ॥४२॥
तत्र ते रतितां नैव यातः सुखविरोधतः ॥
रतिशब्दं तु भजतः सुखमय्यौ परे द्रुती ॥४३॥
भक्तिश्चतुर्विधाऽप्येषा भगवद्विषया स्थिरा ॥
दृष्टादृष्टोभयैकैकफला भक्तिस्त्रिधा भवेत् ॥४४॥
राजसी तामसी भक्तिरदृष्टफलमात्रभाक् ॥
दृष्टदृष्टोभयफला मिश्रिता भक्तिरिष्यते ॥४५॥
शुद्धसत्त्वोद्भवाऽप्येवं साधकेष्वस्मदादिषु ॥
दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु ॥४६॥
दृष्टादृष्टफला भक्तिः सुखव्यक्तेर्विधेरपि ॥
निदाघदूनदेहस्य गङ्गास्नानक्रिया यथा ॥४७॥
रजस्तमोऽभिभूतस्य दृष्टांशः प्रतिबध्यते ॥
शीतवातातुरस्येव नादृष्टांशस्तु हीयते ॥४८॥

तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ॥
स्नात्वा भुक्तवतां भूयो गङ्गायां क्रीडतां यथा ॥४९॥
वर्तमानतनुप्राप्यं फलं दृष्टमुदाहृतम् ॥
भाविदेहोपभोग्यं यत्तददृष्टमुदीरितम् ॥५०॥
रजस्तमःप्रचण्डत्वे सुखव्यक्तिरसत्समा ॥
तीव्रवायुविनिक्षिप्तदीपज्वालेव भासते ॥५१॥
तस्मात्स्वयंप्रभाऽऽनन्दाकाराऽपि मतिसंततिः ॥
प्रतिबन्धकवशान्न स्यात्सुखव्यक्तिपदास्पदम् ॥५२॥
रजःप्रबलसत्त्वांशादीर्ष्याजद्वेषमिश्रिता ॥
मनोवृत्तिः परानन्दे चैद्यस्य न सुखायते ॥५३॥
तमःप्रबलसत्त्वांशाद्भीतिजद्वेषमिश्रिता ॥
मनोवृत्तिः परानन्दे कंसस्य न सुखायते ॥५४॥
तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति ॥
सैव चित्तद्रुतिर्भक्तिरसतां प्रतिपद्यते ॥५५॥
अधुनाऽपि भजन्तो ये द्वेषात् पाशुपतादयः ॥
तेषामप्येवमेव स्यादथ वाऽनेन तुल्यता ॥५६॥
द्रुतौ सत्यां भवेद्भक्तिरद्रुतौ तु न किं चन ॥
चित्ततेद्रुरभावेन वेनस्तु कतमोऽपि न ॥५७॥
रजस्तमोविहीना तु भगद्विषया मतिः ॥
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥५८॥
स्नेहस्यैव विकारः प्रिययोरत्यन्तभावनादनिशम् ॥
विरहासहिष्णुताऽऽत्मा प्रीतिविशेषो रतिर्नाम ॥५९॥
रजस्तमःसमुच्छेदतारतम्येन गम्यते ॥
तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि ॥६०॥
विरहे यादृशं दुःखं तादृशी दृश्यते रतिः ॥
मृदुमध्याधिमात्रत्वाद्विशेषोऽत्रापि वीक्ष्यते ॥६१॥

वैकुण्ठे द्वारकायां च श्रीमद्वृन्दावने तथा ॥
मृदुतीव्रा मध्यतीव्रा तीव्रतीव्रा च सा क्रमात् ॥६२॥
इयं निसर्गसंसर्गौपम्याध्यात्माभियोगजा ॥
संप्रयोगाभिमानाभ्यां समारोपे स्थिता तथा ॥६३॥
स्पर्शे शब्दे तथा रूपे रसे गन्धे च केवले ॥
समुच्चिते च सा तत्रेत्येकैका षड्विधा भवेत् ॥६४॥
शुद्धा व्यामिश्रिता चेति पुनरेषा द्विधा भवेत् ॥
तत्रानुपाधिः शुद्धा स्यात्सोपाधिर्मिश्रितोदिता ॥६५॥
अनुपाधिः परानन्दमहिमैकनिबन्धना ॥
भजनीयगुणानन्त्यादेकरूपैव सोच्यते ॥६६॥
कामसंबन्धभयतः सोपाधिस्त्रिविधा भवेत् ॥
विभावादिसमायोगे शुद्धभक्तिरसो भवेत् ॥६७॥
शृङ्गारमिश्रिता भक्तिः कामजा भक्तिरिष्यते ॥
संबन्धजा रतिर्याति पूर्वोक्तां रसतां द्वयोः ॥६८॥
एको वत्सलभक्त्याख्यः प्रेयोभक्तिस्तथाऽपरा ॥
भयजा रतिरध्यास्ते रसं प्रीतिभयानकम् ॥६९॥
एकदा यद्यपि व्यक्तमिदं रतिचतुष्टयम् ॥
तदा तु पानकरसन्यायेन परमो रसः ॥७०॥
एकद्व्यादिरसव्यक्तिभेदाद्रसभिदा भवेत् ॥
तस्मात् क्व चित्तदभ्यासं कुर्याद्रतिचतुष्टये ॥७१॥
व्रजदेवीषु च स्पष्टं दृष्टं रतिचतुष्टयम् ॥
तच्चित्तालम्बनत्वेन स्वचित्तं तादृशं भवेत् ॥७२॥
रसान्तरविभावादिसंकीर्णा भगवद्रतिः ॥
चित्ररूपवदन्याद्दग्रसतां प्रतिपद्यते ॥७३॥
रसान्तरविभावादिराहित्ये तु स्वरूपभाक् ॥
दशमीमेति रसतां सनकादेरिवाधिकाम् ॥७४॥

रतिर्देवादिविषया व्यभिचारी तथोर्जितः ॥
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥७५॥
देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात् ॥
तद्योज्यं; परमानन्दरूपे न परमात्मनि ॥७६॥
कान्तादिविषया वा ये रसाद्यास्तत्र नेदृशम् ॥
रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात् ॥७७॥
परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ॥
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥७८॥
क्रोधशोकभयादीनां साक्षात् सुखविरोधिनाम् ॥
रसत्वमभ्युपगतं तथाऽनुभवमात्रतः ॥७९॥
इहानुभवसिद्धेऽपि सहस्रगुणितो रसः ॥
जडेनेव त्वया कस्मादकस्मादपलप्यते ॥८०॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमधुसूदनसरस्वतीविरचिते भगवद्भक्तिरसायने भक्तिविशेषप्रतिपादको नाम द्वितीयोल्लासः

भक्तिरसप्रतिपादकः

## तृतीय उल्लासः ।

ननु कोऽयं रसो नाम किंनिष्ठो वा भवेदसौ ॥
अस्य प्रत्यायकः को वा प्रतीतिरति कीदृशी ॥१॥
विभावैरनुभावैश्च व्यभिचारिभिरप्युत ॥
स्थायी भावः सुखत्वेन व्यज्यमानो रसः स्मृतः ॥२॥
सुखस्यात्मस्वरूपत्वात्तदाधारो न विद्यते ॥
तद्व्यञ्जिकाया वृत्तेस्तु सामाजिकमनः प्रति ॥३॥
काव्यार्थनिष्ठा रत्याद्याः स्थायिनः सन्ति लौकिकाः ॥
तद्बोद्धृनिष्ठास्त्वपरे तत्समा अप्यलौकिकाः ॥४॥
बोध्यनिष्ठा यथास्वं ते सुखदुःखादिहेतवः ॥
बोद्धृनिष्ठांस्तु सर्वेऽपि सुखमात्रैकहेतवः ॥५॥

अतो न करुणादीनां रसत्वं प्रतिहन्यते ॥
भावानां बोद्धृनिष्ठानां दुःखाहेतुत्वनिश्चयात् ॥६॥
तत्र लौकिकरत्यादेः कारणं लौकिकं तु यत् ॥
काव्योपदर्शितं तत्तु विभाव इति कथ्यते ॥७॥
लौकिकस्यैव रत्यादेर्लोके यत् कार्यमीक्षितम् ॥
काव्योपदर्शितं तत्स्यादनुभावपदास्पदम् ॥८॥
लौकिकस्यैव रत्यादेर्ये भावाः सहकारिणः ॥
काव्योपदर्शितास्ते तु कथ्यन्ते व्यभिचारिणः ॥९॥
अलौकिकस्य रत्यादेः सामाजिकनिवासिनः ॥
उद्बोधे कारणं ज्ञेयं त्रयमेतत्समुच्चितम् ॥१०॥
ज्ञातस्वपरसंबन्धादन्ये साधारणात्मना ॥
अलौकिकं बोधयन्ति भावं भावास्त्रयोऽप्यमी ॥११॥
भावत्रितयसंसृष्टस्थायिभावावगाहिनी ॥
समूहालम्बनात्मैका जायते सात्त्विकी मतिः ॥१२॥
साऽनन्तरक्षणेऽवश्यं व्यनक्ति सुखमुत्तमम् ॥
तद्ध रसः, केचिदाचार्यास्तामेव तु रसं विदुः ॥१३॥
तेषां प्रत्येकविज्ञानं कारणत्वेन तैर्मतम् ॥
स्थायीभावो रस इति प्रयोगस्तूपचारतः ॥१४॥
एवमव्यवधानेन क्रमो यस्मान्न लक्ष्यते ॥
असंलक्ष्यक्रमव्यङ्ग्यं ध्वनिं तस्मादिमं विदुः ॥१५॥
व्यवधानात्क्रमो लक्ष्यो वस्त्वलंकारयोर्ध्वनौ ॥
लक्ष्यव्यङ्ग्यक्रमं तस्माद्ध ध्वनिमेतं प्रचक्षते ॥१६॥
रसभावतदाभासभावशान्त्यादिरक्रमः ॥
अनन्तरक्षणे यस्माद्ध व्यज्यतेऽवश्यमेव सः ॥१७॥
श्रुतिदुष्टादयो दोषा ये रसप्रतिबन्धकाः ॥
तदभावोऽपि सामग्र्यां निविष्टोऽनिष्टहानिकृत् ॥१८॥

या रीतियो ये च गुणास्तज्ज्ञानमपि कारणम् ॥
अलंकाराश्च विज्ञाता भवन्ति परिपोषकाः ॥१९॥
गुणालंकाररीतीनां भावानां च निवेदकः ॥
तस्य प्रत्यायकः शब्दो वृत्त्या व्यञ्जनरूपया ॥२०॥
वृत्तिः कार्याऽपरोक्षाऽस्य शब्दस्य सुखगर्भिणी ॥
दशमस्त्वमसीत्यादिवाक्योत्थमतिवृत्तिवत् ॥२१॥
नित्यं सुखमभिव्यक्तं "रसो वै स" इति श्रुतेः ॥
प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥२२॥
कार्यज्ञाप्त्यादिवैधर्म्यं यत्तु कैश्चिन्निरूपितम् ॥
तदप्येतेन मार्गेण योज्यं शास्त्राविरोधतः ॥२३॥
परमानन्द आत्मैव रस इत्याहुरागमाः ॥
शब्दतस्तदभिव्यक्तिप्रकारोऽयं प्रदर्शितः ॥२४॥
अर्थवादाधिकरणे नवशैलादिवर्णनम् ॥
श्रोतॄणां सुखमात्रार्थमिति भट्टैरुदाहृतम् ॥२५॥
कार्यान्वितत्ववादेऽपि न विरोधोऽस्ति कश्चन ॥
यस्मात् कृतीप्सितत्वेन कार्यं सुखमपीष्यते ॥२६॥
अलौकिकनियोगे तु न किंचिन्मानमीक्ष्यते ॥
लोके वाचां च सर्वेषां तत्परत्वं न युज्यते ॥२७॥
प्रयोजनवदज्ञातज्ञापकत्वं च मानता ॥
शब्दस्य कार्यपरता स्वाचार्यैरेव खण्डिता ॥२८॥
देवताऽधिकृतिन्यायात् पदैरन्यपरैरपि ॥
प्रयोजनवदज्ञाताबाधितार्थमतिर्भवेद् ॥२९॥
तस्मादन्यपरत्वे वा स्वातन्त्र्ये वा पदानि नः ॥
व्यञ्जयन्ति परानन्दं सहकार्यानुरूप्यतः ॥३०॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमधुसूदनसरस्वतीविरचिते श्रीभगवद्भक्ति-रसायने भक्तिरसप्रतिपादको नाम तृतीयोल्लासः । ग्रन्थश्च सम्पूर्णः ॥

श्रीः

# सटीकभक्तिरसायनस्य शुद्धिपत्रम्—

| पृ० प० अशुद्धयः | पृ० प० शुद्धयः | पृ० प० अशुद्धयः | पृ० प० शुद्धयः |
|---|---|---|---|
| ३–१० नासङ्गा | ३—१० नासङ्गा | ५२–२३ ताया | ५२–२३ तीया |
| ४–२२ शिपा | ४—२२ शिपो | ५७—७ लिता | ५७—७ लितो |
| ५–१४ दर्शं | ५—१४ दर्श | ६०–२१ कर्त्त | ६०–२१ कर्त्तु |
| ५–२१ दाय | ५—२१ दीय | ६७–२१, ३७ . | ६७–२१, ३५ |
| ६–१८ निदशः | ६—१८ निर्देशः | ६९—७ ब्राज | ६९—७ ब्राज |
| ७–१५ ह्मणि | ७—१५ ह्मणि | ६९–११ विपरी | ६९–११ विवरी |
| १४—४ भक्ति योगस्य | १४—४ भक्ति-योगस्य | ६९–१६ सप्त | ६९–१६ पञ्च |
| १४–१२ ाचत्त | १४–१२ चित्त | ७६–२३ प्रेया | ७६–२३ प्रेयो |
| १५—६ ाशथि | १५—६ शिथि | ८४—१ धम | ८४—१ धर्म |
| १५–११ लक्ष्य | १५–११ लक्ष | ८६–१४ तन्न | ८६–१४ तन्तू |
| १५—६ त्रन्त | १५—६ त्रन्तु | ८७—२ नुल | ८७—२ नुपल |
| १७—३ घृता | १७—३ घ्रता | ८९—१ साहू | ८९—१ साव्ह |
| १७–२० बभा | १७–२० वभा | १०१–२३ सखा | १०१–२३ सुखा |
| २२–१४, १९ | २२–१४, १७ | १०२—५ हरेबै | १०२—५ हरेवैं |
| २३–१६ बद्ध | २३–१६ वद्धू | १०९–१८ अन | १०९–१८ अनु |
| २३–१८ वत्येव भूतार | २३–१८ वह्निरेव भूतैरार | ११६–२४ वण्य | ११६–२४ वर्ण्य |
| २३–२१ पट्ट | २३–२१ पट्ट | ११७—७ गान्धव | ११७—७ गान्धर्व |
| २३–२४ द्रव्यचक्षुव | २३–२४ द्रव्यं चक्षुर्व | १७–२१ क्य | ११७–२१ क्यं |
| २७—४ पूर्णं | २७—४ पूर्णं | ११८–१६ पुप्प | ११८–१६ पुष्प |
| २७–१३ प्रसरा | २७–१३ प्रस्तरा | ११९–१५ भ्नम | ११९–१५ भ्रम |
| ३७–२५ पदेय | ३७–२५ पादेय | १२१—४ ान | १२१—४ निं |
| ४९–२५ मत्रै | ४९–२५ मात्रै | १२३–१२ साभा | १२३–१२ सौभा |
| ५०–२३ लस्याः | ५०–२३ लस्याः | १४१—८ वर्त्त | १४१—८ वर्त्तु |
| | | १४२–१७ त्वमु | १४२–१७ स्वमु |
| | | १४४–१८ श्रोत | १४४–१८ श्रोतृ |

अत्र १३५ पृष्ठे—नवमी पङ्क्तिः सप्तमपङ्क्तिस्थाने; तथा षोडशीसप्तदश्यौ पङ्क्ती चतुर्दशीपञ्चदश्योः पङ्क्त्योः स्थाने पठनीयाः ।

इति ।